मुरुं चाचलसंकाशमवधीत्पुष्करेक्षणः ॥ ५
तथा कंसो महातेजा जरासंधेन पालितः ।
विक्रमेणैव कृष्णेन सगणः शातितो रणे ॥ ६
सुनामा नाम विक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥ ७
बलदेवद्वितीयेन कृष्णेनामित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ८
दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ९
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानवहत्पुष्करेक्षणः ॥ १०
अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ११
जरासंधं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास पृथगक्षौहिणीपतिम् ॥ १२
चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घे विवदमानं च जघान पशुवत्तदा ॥ १३
सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदम् ।

---

5 $^{a}$) $K_1$ जर्बूं, $B_{1-4}$ $D_{c1}$ पीठं (for जम्भ) —$^{b}$) $Ś_1$ $K_{3\,4}$ पीत चापि; $B_{1\,2\,4}$ मुरुं जभ, $B_3$ मुर जव; $D_{c1}$ मुर जंभ, $D_3$ अरिष्ट च (for पीठ चापि) $B_1$ महासुज (for °मुरम्) —$^{c}$) $K_{3\,4}$ $D_{4\,8}$ मुरं, $K_3$ सुर; $D_{n1}$ मरु; $D_1$ मुसु (for मुरु) $B_5$ $D_n$ $D_{5-8}$ चामर; $D_2$ चांतक (for चाचल) $B_{1-4}$ $D_{c1}$ हयग्रीव महाकायम् —$^{d}$) $B_{2-4}$ $D_{c1}$ पुरुषोत्तम (for पुष्करेक्षण)

6 $^{a}$) $K_4$ कंशो, $D_6$ केशी (for कंसो) S महाराजो ($G_5$ °बाहुर्) (for °तेजा) —$^{c}$) $D_2$ कर्णेन, M कृष्णस्य (for कृष्णेन) —$^{d}$) $D_2$ क्षणदा°, $D_5$ गणदा (for सगण). $K_{3\,4}$ $B_{3\,5}$ $D_{n2}$ $D_{2\,5.6}$ पातितो, $D_{4\,7\,8}$ शासितो (for शातितो) $B_{2-4}$ $D_{c1}$ निहत° सगणो रणे, S सानुबधाश्रयो हत°

7 $^{a}$) $D_8$ सुनाम; $G_1$ $M_{3-5}$ सुदामा (for सुनामा). $K_{1\,2\,4}$ $D_{n1}$ $D_1$ नाम विख्यात, $K_3$ रणविख्यात, $B_6$ रणविक्रांत°; $D_{c1}$ बलविक्रांत, $D_7$ चाथ मित्रघ्न° (for नाम विक्रान्त°) $D_4$ corrupt —$^{b}$) $D_3$ सम्यगक्षौहिणी, T $G_{1\,3}$ $M_{1-4}$ समग्रा($M_{1\,2}$ सहस्रा)क्षोहिणी $B_{2\,3}$ $D_{c1}$ °वृत° (for पति) —$B_4$ om $7^{cd}$ —$^{c}$) $D_{n1}$ $D_{5\,8}$ $G_1$ M भोजराजन्य°; $D_{3\,4\,7}$ °राजश्च (for °राजस्य) Cv as in text —$^{d}$) $D_4$ भ्रातर सत्यवीर्यवान् Cv cites भ्राता (as in text)

8 $^{c}$) $Ś_1$ $K_{1-4}$ $D_{n1}$ $D_{1\,4\,5\,7\,8}$ मनस्वी, Cd तरस्वी (as in text) —$^{d}$) $Ś_1$ T $G_{2-5}$ ससेन, $K_{1\,2\,4}$ D (except $D_{c1}$) स शूर° (for ससैन्य°) T $G_{3-5}$ सेनवान् (for °राट्)

9 $^{a}$) $Ś_1$ दुर्वासाश्चैव $T_2$ $G_3$ विप्रेंद्रस; $G_{1\,2\,4\,5}$ M विप्र■ (for विप्रर्षिस्). —$^{b}$) $D_{n2}$ $D_3$ सप; $D_6$ तत (for तथा) —$^{d}$) $D_{n2}$ $D_{3\,6}$ T $G_{3-5}$ वरं (for वरान्)

10 $^{a}$) $G_4$ तदा (for तथा) $D_6$ गंधार°. $M_3$ राजन्य (for राजस्य) —$^{b}$) $D_{n2}$ $D_{5\,6\,8}$ $T_2$ $G_{2-5}$ Ca d वीर, $D_{c1}$ धीर (for वीर) —$^{d}$) B $D_{3\,6\,8}$ $T_1$ आवहत्, $D_{n1}$ अहनत्, $G_1$ अहरत्, Cd अवहत् (as in text) $B_{2-4}$ S पुरुषर्षभ°, $D_2$ पुष्करेक्षया (for °क्षण)

11 $^{a}$) Cv राजान (for °नो) —$^{b}$) T $G_{3-5}$ [s]भवन्, $G_2$ [s]वहन् (for यस्य) $D_{n2}$ $D_3$ यस्य याता; $G_1$ M सिंधुजाता (for यस्य जात्या) —$^{c}$) $D_4$ रथे वैवाहके युक्ता, $D_{7\,8}$ रथैर्वैवाहिकैर्युक्ता, Cv वैवाहिके रथे युक्ता —$^{d}$) $K_1$ $D_4$ कृतव्रण; $D_7$ क्षतव्रणा (for कृत°). Cv प्रतोदनकृतव्रणा°

12 $^{a}$) $B_{1-3}$ $D_{c1}$ S (except $G_2$) महाराज (for °बाहुम्) —$^{b}$) $D_4$ उपयाने (for उपायेन) —$^{c}$) T $G_3$ भीमेन; Ca d परेण (as in text) —$^{d}$) $K_1$ पृथगक्षौहिणीं पतिं, $B_{1\,3\,5}$ $D_{c1}$ $D_{2\,7\,8}$ S समग्रा($D_{7\,8}$ °हस्रा)क्षौ(T $G_1$ $M_{1-4}$ °क्षो)हिणीपतिं, $B_{2.4}$ समग्राक्षौहिणीश्वर

13 $^{b}$) $K_3$ राज, $D_3$ राजन् (for राज) $K_4$ $D_7$ $G_1$ बलिं, $M_{3-5}$ कृतं (for बली) —$^{c}$) $K_{2.4}$ $B_3$ $D_5$ अर्घ्ये; $D_{c1}$ $D_{n1}$ $D_4$ अर्घे, $D_8$ यज्ञे (for अर्घे) $D_6$ विवादमाने (for विवदमान) $Ś_1$ $K_{3\,4}$ $D_1$ वै; $B_{2-4}$ $D_{c1}$ तु (for च) $K_1$ अर्घेण विवदामानं (sic), S अर्घ्येण विवदित वीरं —$^{d}$) $G_1$ M जघान पुरुषोत्तम

14 $^{a}$) $K_{1-4}$ दैत्यपतिं; $D_{2\,5}$ °वरं, $D_6$ दैत्य परं; $D_7$ यज्ञे पुरं (for दैत्यपुरं) —$^{b}$) $K_{1-4}$ $D_7$ S

समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ १४

अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
वत्सगर्गकरूषांश्च पुण्ड्रांश्चाप्यजयद्रणे ॥ १५

आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान् ।
काश्मीरकानौरसकान्पिशाचांश्च समन्दरान् ॥ १६

काम्बोजान्वाटधानांश्च चोलान्पाण्ड्यांश्च संजय ।
त्रिगर्तान्मालवांश्चैव दरदांश्च सुदुर्जयान् ॥ १७

नानादिग्भ्यश्च संप्राप्तान्व्रातानश्वशकान्प्रति ।
जितवान्पुण्डरीकाक्षो यवनांश्च सहानुगान् ॥ १८

प्रविश्य मकरावासं यादोभिरभिसंवृतम् ।
जिगाय वरुणं युद्धे सलिलान्तर्गतं पुरा ॥ १९

युधि पञ्चजनं हत्वा पातालतलवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥ २०

खाण्डवे पार्थसहितस्तोपयित्वा हुताशनम् । C 7 402 B 7 ॥ 21 K. 7 ॥ 21

---

(except G6) साल्वगुप्तं; D6 सुगुप्त च (for शाल्वगुप्त) —c) Ś1 वि*त्वा (for विक्रम्य) —d) D4 भारत (for माधव॰)

15 a) K4 अगा वंगा, T G1 3 6 M अगवग-, G4 अंकवंक (for अङ्गान्वङ्गान्) K4 Dc1 D 7 G2 4 M1–3 कलिंगाग्र् (for कलिङ्गाग्र्) —b) B1 Dn2 T1 G4 मगधान् K1 कैशि (for काशि) K4 B1–3 Dn2 D2–3 कोशलान्, Dc1 कौशलान्, Dn1 कौशिकान्; G2 4 -कौसलान् (for कोसलान्) —c) K1–3 Dn1 D2 7 वत्सवर्गं, B1 2 (marg) 3–5 D1 व(B3 m वा)-त्सगार्ग्यं, B4 मात्स्यगार्ग्यं, D3 वत्सदतान्, D6 तथा वत्स; D8 वत्सवर्गं (for वत्सगर्गं) Dc1 वात्स्यंगार्ग्यं कलिंगांश्च, Dn2 करूषां मालवाश्चैव; S वत्सभर्गं(G1 M वत्सकांश्च, G5 वात्स्यभर्ग्यं)करूषांश्च —d) B2–5 Dc1 Dn2 पौंड्रांश्च, Dn1 D4 पुंड्रांश्च; D1 मुडाश्च, D5 पुंड्राश्च; D7 पुड्राश्च, M2. 4 पुण्यांश्च (for पुण्ड्राश्च) B2–4 Dc1 चैव, T G1. 3 4 M2–5 चाय (for चापि) D4 [अ]जयन् (for [अ]जयद्)

16 a) K1 आवन्त्यान्, K4 T आवंत्यां, G5 आवत्या (for आवन्त्यान्). Dn1 दक्षिणात्याश्च (for दाक्षि॰) —b) D1 पार्वतेयान् K1 दशीकरान्, B5 G3 कशेरकान्; Dc1 दुरासदान्, Dn2 D3 कसेरुकान्, D4 दसेकरान्; T G2 4 M5 कशेरुकान्, G1 M1–4 दशेरुकान्, G6 करेणुकान् (for दशेरकान्) —c) Ś1 कश्मीरकान्, Dc1 काश्मीरजान् (for ॰रकान्) K3 B D1 औरस्निकान्; D3 जानुवानान्, D5 औंकरमान, D8 केसरकान्; T G3 5 औरभ(G2 ॰भ्र)कान्, G1 M1 2 औद्रिकान्, G4 औभरकान्, G6 औरन्ध्रवान् (for औरसकान्) —d) K1 समर्दकान, B Dc1 Dn2 समुद्गलान, Dn1 D2 4 5 7 8 सरयं(D7 8 ॰घुं)रान्, D1 समदरान्, D6 समाघय, T G2–5 समत(G3 ॰द)कान् (for समन्दरान्)

17 a) Ś1 D1 कांभोजान् Dn1 D1 वारधानांश्च, Dn2 D8 वाटधाना(Dn2 ॰नां)स्तु, D6 वाह्लिकांश्चैव, S नाल(T G1 M ॰ळ)वाश्चैव (for वाटधानाश्च) —b) Ś1 D5 चोड्रान्, K1 चोड्यान्, K2 3 चौंड्रान्, Dn1 चौंडान्; Dn2 D8 पुड्रान्, D4 लोधान्, D6 सुद्रान्, T G1 3 M चोळान्, G4 चौलान् (for चोलान्) Dn2 D3 अन्यांश्च, D6 पाडुश्च (for पाण्ड्यांश्च) T G2–5 माधव॰ (for संजय) —c) B3 (marg as in text) विदर्भान् (for त्रिगर्तान्) Dn2 मालवास्त्वष्टान्; D4 मालवान्स्वस्तान्, T G2–5 मगधांश्चैव (for मालवांश्चैव) —d) Ś1 K4 दरदांश्च, B5 दारदांश्च, Dn2 D6 पारदांश्च (for दरदांश्च) Dn2 सदुर्जयान् S (except G1) क(M द)रदांश्चैव दुर्जयान्

18 a) D8 om. च Dn1 संप्राप्ता, Dn2 सम्प्राप्तान् (for संप्राप्तान्) —b) Dn1 D5 जातानश्व, Dn1 जानानांश्च (for व्रातानश्व) B1 4 5 Dn2 D2 खर्मां(Dn2 वसां)श्चैव शकांस्तथा, B2 3 Dc1 D4 7 8 नृपांश्चैव (D4 7 8 राजानश्च) शकास्तथा, D6 (orig) रविचोला शकान्प्रति, D6 (marg sec m) एतानन्यान्प्रकामतः; T G1–4 M आंध्रान्म्ले(G1 M1 2 अध्रम्ले, G4 आंघ्रान्म्ले; M3–5 संध्रान्म्ले)च्छगणानपि; G5 आंध्रम्लेच्छगणानपि —d) G5 (inf lin as in text) सवनांश्च (for यवनांश्च) Ś1 K (K5 om) B1 4 Dn D1–5 7 8 यवनं च स(K1 म)हानुगं, D6 धनंजयसहानुगं

19 b) D7 चादीभिर् (for यादोभिर्) D1 यादोगणनिषेवित, D5 जाटोरतिससवृत (sic) —d) Dn2 D2 3 5 6 तदा (for पुरा) Ś1 सलिलान्विर्गत पुरा

20 a) B5 युद्धे, G1 M तत्र (for युधि) —b) T G5 M3 पाताळतलं M1. 2 -वासिन॰ (for -वासिनम्) B5 दैत्य पातालवासिन —d) Ś1 K1 3. 4 D1 transp दिव्यं and शङ्खम् K4 om वाप्त

21 a) K4 om सह —d) Ś1 K1. 2 चक्रे (for चक्र) Ś1 महायशा, B2–4 Dc1 तथैव च, B1 D8 महाबलं, G1 M1 2 जनार्दन (for महाबल॰)

आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः ॥ २१
वैनतेयं समारुह्य त्रासयित्वामरावतीम् ।
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् ॥ २२
तच्च मर्षितवाञ्शक्रो जानंस्तस्य पराक्रमम् ।
राज्ञां चाप्यजितं कंचित्कृष्णेनेह न शुश्रुम ॥ २३
यच्च तन्महदाश्चर्यं सभायां मम संजय ।
कृतवान्पुण्डरीकाक्षः कस्तदन्य इहार्हति ॥ २४
यच्च भक्त्या प्रपन्नोऽहमद्राक्षं कृष्णमीश्वरम् ।
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चागमत् ॥ २५
नान्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः ।
कर्मणः शक्यते गन्तुं हृषीकेशस्य संजय ॥ २६
तथा गदश्च साम्बश्च प्रद्युम्नोऽथ विदूरथः ।
आगावहोऽनिरुद्धश्च चारुदेष्णश्च सारणः ॥ २७
उल्मुको निशठश्चैव झल्ली बभ्रुश्च वीर्यवान् ।
पृथुश्च विपृथुश्चैव समीकोऽथारिमेजयः ॥ २८
एते वै बलवन्तश्च घृणिवीराः प्रहारिणः ।

---

22 ᵃ) D01 समासाद्य (for °रुह्य) —ᵇ) K1 3 4 D1 तोषयित्वा; Dn2 D8 6 द्राव° (for त्रास°) Ś1 K1 3 4 D1 मनस्विनीं, K2 मनीषिणीं, D5 [अ]मरावतिं (for °वतीम्) —ᶜ) D4 भुवनाद् (for भवनाद्) Ś1 महेंद्रात्तत्पुरं गत्वा; K1-3 D1 महेंद्रात्त पुर (K4 °रो) गत्वा —ᵈ) Ś1 अवाप्तवान्; Dn2 D5 6 उपाहरत् (for °नयत्)

23 ᵃ) Dn2 D8 सत्तु; D5 6 तत्र (for तच्च) — After 23ᵃᵇ, Dn1 D4 7 8 ins

83* गोवर्धनस्योद्धरणे ज्ञात्वा वै समसज्जत ।

[Dn1 समजानय, D7 समभज्जना (for °सज्जत)]

—ᶜ) D2 राजा (for राज्ञां) Dn1 नाप्यजितं; Dn2 वाप्य°, D2 T G2 4 चाप्यजित, D7 चाथ जितं; G6 च न कृत°, M8 चाविदित, M4 चाविजितं (for चाप्य°). B2 Dn M3 4 किंचित्, D2 5 T G2-5 कश्चित् (for कंचित्) B1 D3 राज्ञश्चाप्यजितान्कांश्चित् —ᵈ) B2 5 D01 Dn2 D2-4 6-8 S शुश्रुम° D5 कृष्णं नेह न शुश्रुम°

24 ᵃ) T1 G3 अस्या यन्; T2 G2 4 अस्यां यन्, G1 M यच्च वै; G5 अस्याय (for यच्च तन्). —ᵇ) Dn1 केशव° (for संजय) — B3 reads 24ᶜ-25ᵈ on marg —ᵈ) T G1-5 तदन्य° क (by transp) B1 D2 इव (for इह) S करिष्यति (for इहार्हति) Ś1 सन्नवान्श्रोतुमर्हति; B2-5 D01 कोन्य कर्तुं तथार्हति

25 B3 reads 25 on marg —ᵃ) Dn1 तत्र, D3 तच्च, D5 6 यत्र (for यच्च) Ś1 B1 D2 6 प्रपन्नो (for प्रपन्नो) —ᶜ) G5 सुनिस्तर (for °दित) —ᵈ) Ś1 चाभवत्, K (K5 om) D3 4 7 8 चागत; B1 4 D01 Dn D1 6 चागम, B2 3 5 D2 5 T G1 M3-5 चागमात् (for चागमत्) Ca d cite अगमम् and Cap Cdp आगमात्

26 ᵃ) B नांतं (for नान्तो). —ᵇ) D8 बुद्धि (for बुद्ध्या). —ᶜ) B1 4 D01 Dn D1 2 4 6-8 कर्मणां; D3 कर्मणा (for कर्मण°) D5 om गन्तुं

27 ᵃ) D1 3 सदा; M1 2 यथा (for तथा). D6 [अ]गदश्च (for गदश्च) Ś1 सांबश्च; Dn2 D1 6 सांपश्च (for साम्बश्च) —ᵇ) Ś1 K1 2 Dn D3-5 7 8 प्रद्युम्नश्च; D2 प्रद्युम्न, D6 विद्युम्नश्च (for प्रद्युम्नोऽथ) Ś1 वितूरथ; K1 पितूरथ°; K2-4 S (except G2) विदूरथ°; Dn1 महारथ°; D1 विद्धरथ° (for विदूरथ°) —ᶜ) Ś1 K1 3 4 D4 अ(D4 आ)गाहवो; B1-3 5 D1 2 5 अगावहो; B4 असावहो; D01 अगावणो; Dn1 अवगाहो; D6 अंगावोह; D7 8 आगवेहो; T G2-4 आशावहो; G5 आसाह्वो (for आगावहो) M3 आगावद्युम्नायुक्तस्य —ᵈ) K1 चारुदोम° स; G5 चारुदो ष्णश्च (for °देष्णश्च). Ś1 K2-4 B (except B1) D01 Dn2 D1 2 5 6 G3 स- (for च).

28 ᵃ) D5 उल्मूको; T1 उलमको; G1 M उन्मुको (for उल्मुको) K1 निशिठश्चैव; Dn1 D4 7 8 निषध (Dn1 °त)श्चैव (for निशठ°). —ᵇ) Ś1 झल्ली बर्धश्च; K1 लल्मी बभ्रुश्च, K2 गल्ली बभ्रुश्च; B1 2-5 Dn1 D1 4 झिल्ली बभ्रुश्च; Dn2 सिल्ली बभ्रुश्च, D2 5 झल्लि (D3 झिल्लि) चक्रश्च; D8 सल्लो बभ्रुश्च, D3 शाठो बभ्रुश्च, D7 भिल्ली बभ्रुश्च; T G1-5 विबभ्रुश्चैव; M3 4 झल्लिबभ्रश्च; M5 झल्लिर्बभ्रुश्च (for झल्ली बभ्रुश्च) —ᶜ) G3 प्रयुश्च; G5 प्रथुश्च (for पृथुश्च) D7 विष्टथुश्च; G1 विप्रथुश्च (for विपृथुश्च) —ᵈ) K3 B Dn D1 7 शमीको (D7 °कों) थ; D2 5 श(D5 स)मीकश्च; D4 समीकोथ; G1 M3 समि(M5 समी)कोय (for समीकोऽथ) D01 रिपुंजय°; M1 2 [अ]रिमेजय (for [अ]रिमेजय°). K3 D8 समीको वरिमजय; T G1-5 समकोधो नु (G2 समं कोधाश्च, G5 समकोधश्च) सजय.

29 ᵃ) B Dn2 D2 एतेऽन्ये; D01 इत्येते (for एते

कथंचित्पाण्डवानीकं श्रयेयुः समरे स्थिताः ॥ २९
आहूता वृष्णिवीरेण केशवेन महात्मना ।
ततः संशयितं सर्वं भवेदिति मतिर्मम ॥ ३०
नागायुतबलो वीरः कैलासशिखरोपमः ।
वनमाली हली रामस्तत्र यत्र जनार्दनः ॥ ३१
यमाहुः सर्वपितरं वासुदेवं द्विजातयः ।
अपि वा ह्येष पाण्डूनां योत्स्यतेऽर्थाय संजय ॥ ३२
स यदा तात संनह्येत्पाण्डवार्थाय केशवः ।
न तदा प्रत्यनीकेषु भविता तस्य कश्चन ॥ ३३
यदि स्म कुरवः सर्वे जयेयुः सर्वपाण्डवान् ।
वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ॥ ३४
ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन्रणे ।
कौरवांश्च महाबाहुः कुन्त्यै दद्यात्स मेदिनीम् ॥ ३५
यस्य यन्ता हृषीकेशो योद्धा यस्य धनंजयः ।
रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः ॥ ३६
न केनचिदुपायेन कुरूणां दृश्यते जयः ।
तस्मान्मे सर्वमाचक्ष्व यथा युद्धमवर्तत ॥ ३७
अर्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः । C 7 419 B 7 11 28 K 7 11 38

---

वै ) —[b] ) B2–4 Dc1 वृष्णिपुत्रा (for °वीरा°). B1 महाबला° (for प्रहारिण°) —[c] ) G5 कथ वै (for कथ चित्) —[d] ) K1–4 D1 समरस्थिता°, B2–4 Dc1 सम रार्थिन° (for समरे स्थिता° ) Dn1 (marg) श्रयेयु समरे श्रिता°

30 [a] ) G4 आहूता (for आहूता) —[c] ) K1 D6 शमयितं; D1 शंशयितं, D7 8 शंशयिक (for संश यितं) B5 कृत्स्न (for सर्वं)

31 [a] ) D4 lacuna for बलो —[b] ) A few MSS कैलाश —[c] ) D7 om हली —[d] ) T G M1 2 3 यत्र तत्र (by transp ), M2 4 यत्र यत्र K1 मनीषिण (for जनार्दन° ) —After 31, S ins

84* एक एव द्विधा भूतो दृश्यते मानुषैर्भुवि ।

32 G5 om 32 —[a] ) G3 4 पितुर्यमाहु पितर —For 32[ab], T G1 2 M subst

85* पितॄणामपि यः पूर्वो वेदेषु परिपठ्यते ।

[ G1 देवेषु (for वेदेषु) ]

— G3 4 om. 32[cd] —[c] ) K1 वार्ष्णेय°, B1–4 Dc1 पार्थाय (for वा ह्येष) B5 सोपि संजय पाहुना; T G1 2 M सोपि कृच्छ्रेषु पार्थानां —[d] ) Dn1 योत्स्यत B5 वीर्यवान्; T G1 2 M केशव (for संजय) B1–4 Dc1 योत्स्यते केशव स्वय; D4 योत्स्येर्थाय स***

33 T G2 M5 om. (hapl.) 33[ab] —[a] ) D4 यत् (for स) K2 D4 7 तदा; K3 सदा (for यदा) B (except B5) Dc1 युध्येत (for सनह्येत्) K1 सदा तात संनह्येस्यो, G3 4 सोपि कृच्छ्रेषु पार्थानां —[b] ) K1–4 G3–5 योत्स्यतेर्थाय, B1, 3 4 पांडवार्थे हि (for °वा र्थाय) K3 Dc1 D1, 3 संजय, K4 सजय°; B3 युद्ध्यत (for केशव° ) —[c] ) B1–4 Dc1 D1 प्रतिसयोद्धा; B5 प्रत्यनीकाय, S प्रत्यनीको( M2 °के )न्यो (for प्रत्यनीकेषु) —[d] ) Dc1 reads from ता तस्य up to महात्मन° (in 43[d] ) twice Ś1 K2–4 Dn D1 2 4 5 7 तत्र, K1 तव; B2 तात (for तस्य) D3 भविता शं कथचन, D6 शिष्ट स्यातोथ कश्चन

34 For the repetition in Dc1, cf v 1 33 —[a] ) Dn1 यद्यस्मत्; D2 यद्दि स्म (for यदि स्म) —[b] ) K3 B Dc1 (both times) D1 3 S नाम (for सर्वं ). K1 -पार्थिवान् (for पाण्डवान्) —[c] ) B2 (marg) 3. 4 Dc1 (both times) [ऽ]र्थे हि (for ऽर्थाय) Dn1 transp तेषां and वै D6 वार्ष्णेयो योधयस्तेषां —[d] ) B3 शरम्, B4 D2 5 अस्त्रम् (for शस्त्रम्)

35 For the repetition in Dc1, cf v 1 33 —[a] ) Ś1 K1–4 तत्र (for तत° ) Dn1 D6 T G1–4 M नरव्याघ्रान्, G5 °व्याघ्र (for °व्याघ्रो) —[b] ) K4 नर पातिं; Dn1 भूमिपतीन्, D6 रण°; S नारायणो (for नरपतीन्) —[c] ) K3 कौरवश्च (for °वांश्च )

36 For the repetition in Dc1, of v 1 33 —[b] ) B3 4 Dc1 (both times) transp योद्धा and यस्य —[c] ) D8 खेटे, G1 M1–4 सख्ये; G2 5 शक्तः (for सख्ये) —[d] ) Ś1 K3 4 Dn1 D4–8 प्रत्यनीके (for °नीको) K1 D4 [ऽ]भवद्रथ°; T G3 4 भवेद्रथ (T °थ° ), G5 भवेद्युधि (for भवेद्रथ° )

37 For the repetition in Dc1, cf. v 1 33 —[c] ) D1 om मे S सजयाचक्ष्व (for सर्वमाचक्ष्व) Ś1 K1 4 B5 D4 7 8 तस्मात्सर्वं (B5 D4 7 8 तन्मे सर्वं ) स( K4 म )माचक्ष्व

38 For the repetition in Dc1, of v 1, 33,

अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ॥ ३८
प्राधान्येन हि भूयिष्ठममेयाः केशवे गुणाः ।
मोहाद्दुर्योधनः कृष्णं यन्न वेत्तीह माधवम् ॥ ३९
मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः ।
न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् ॥ ४०
पूर्वदेवौ महात्मानौ नरनारायणावुभौ ।
एकात्मानौ द्विधाभूतौ दृश्येते मानवैर्भुवि ॥ ४१
मनसापि हि दुर्धर्षौ सेनामेतां यशस्विनौ ।
नाशयेतामिहेच्छन्तौ मानुषत्वात्तु नेच्छतः ॥ ४२
युगस्येव विपर्यासो लोकानामिव मोहनम् ।
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ॥ ४३
न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च ।
न क्रियाभिर्न शस्त्रेण मृत्योः कश्चिद्विमुच्यते ॥ ४४
लोकसंभावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ।
भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि संजय ॥ ४५
यां तां श्रियमसूयामः पुरा यातां युधिष्ठिरे ।
अद्य तामनुजानीमो भीष्मद्रोणवधेन च ॥ ४६
तथा च मत्कृते प्राप्तः कुरूणामेष संक्षयः ।

---

Before 38, K4 ins अर्जुन उवाच — b) B2-4 Dc1 (both times) D6 S कृष्णश्चात्मा, D4 कृष्णस्यात्मा; D5 कृष्णो ह्यात्मा (for कृष्णेऽप्यात्मा) — c) D1 7 8 वै जयो; T G2-5 तु जयो (for विजयो) B4 M1 2 नित्य (for नित्य) — After 38, B Dc1 ins

86* सर्वेष्वपि च लोकेषु बीभत्सुरपराजित ।

39 For the repetition in Dc1, cf. v 1 33 — a) B Dc1 (both times) [ए]व (for हि) S तु भूयिष्ठा (for हि भूयिष्ठम्) — b) T G3 अमोघा (for अमेया) — c) Dn1 मूढो (for मोहाद्) T G1-4 M तु वशिन (G3 M3 4 °न), G5 वशीकृतं (for दुर्योधन) D7 8 कृष्णो (for कृष्ण) — d) B Dc1 (both times) D1 यो न (for यन्न) Ś1 lacuna for यन्न वे K1 य पश्यतीह; K3 8 द्वेषयस्येव; D5 न मन्यतीह; S न सर्वो वेत्ति (for यन्न वेत्तीह) D4 7 8 महाबलं (for [इ]ह माधवम्) D6 जानात्येव हि मानवं

40 For the repetition in Dc1, cf v 1 33 — a) K1 D3 देवयोगेन; D4 8 मृत्युपाशे(D8 °से)न; D7 मृत्युपाशिने (sic), T G M1. 2 5 देवपाशेन; M3 4 देवमायेन (for दैवयोगेन) — b) D4 8 दैवदंड; D7 दैवदंडश्च (hypermetric) (for मृत्युपाश-) K1-4 D1 -वशीकृत, D5 तिरस्कृत (for पुरस्कृत) S वैष्णवेन समावृत

41 For the repetition in Dc1, cf. v 1. 33 — a) D5 पूर्वौ देवौ (for पूर्वदेवौ) — b) K4 om (hapl.) from नर up to एकात्मानौ (in 41c) — c) D4 7 8 द्विधा कृत्वा, M1 2 द्विधाभूतो (for द्विधाभूतौ) — d) K1. 3 4 D3-5 G3 दृश्यते (for दृश्येते) B1. 4 G1 M1. 2 मानुषैर्भुवि; B2 3 Dc1 (both times) मानुषैरपि, Dn1 D6 मानवौ भुवि (for °वैर्भुवि).

42 For the repetition in Dc1, cf v. 1 33 — a) B2-4 Dc1 (both times) चापि, G5 [अ]पीह (for [अ]पि हि) Ś1 K1 2 4 D6 दुराधर्षौ (for हि दुर्धर्षौ) — b) Ś1 K4 D8 एनां, D5 एतौ (for एतां) Ś1 मनस्विनौ (for यश°) — c) Ś1 K1-4 ममेच्छतौ; D1 समेक्षंतौ; M3 5 यदीच्छंतौ, M4 lacuna (for इहेच्छन्तौ) D2 5 नाशयेतामहिंसवौ, D8 नाशयेतामहच्छत्रून् (sic) — d) D3 6 मनुष्यत्वात् (for मानुष°) K3 D2 च, T G2-5 न (for तु) T G2-5 चेच्छत; G1 M3 4 नेच्छतां, M1 2 5 नैच्छतां (for नेच्छत°)

43 For the repetition in Dc1, cf v 1 33 — a) B4 लोकस्येव (for युग°) — b) B2 5 Dn2 D3 6 इह (for इव) — c) D4 भीष्मस्येव हि (hypermetric), D7 8 भीष्मस्येक (for भीष्मस्य च) T G2-5 वधं (for वधस्)

44 a) Ś1 B3 4 न ह्येव, Dn2 D8 नार्जवाद्; D6 नार्जवान् (for न ह्येव) — c) K1. 4 Dn1 D1 5-7 G1 शास्त्रेण; B1. 2 5 D2 चास्त्रेण, B4 Dc1 चेष्टाभिर् (for शस्त्रेण) — d) B (except B1) D6 निवार्यते, Dc1 निवारित (for विमुच्यते) S मृत्योरध्वनि मु(G5 °ध्वान मु, G6 [inf lin] °ध्वा विमु-; M3 4 °ध्वनि प)च्यते

45 d) K1 D4 5 किं तु, Dc1 किमु (for किं नु) Ś1 जीवसि (for जीवामि)

46 a) Dn1 D5 6 असूयाम; D4 अयास्याम; D7 8 अपश्याम (for असूयाम) — b) B3 परां (for पुरा) B Dc1 D6 दृष्ट्वा, Dn1 D8 यातीं, D2 5 जातां, D3 जाता (for यातां) K4 पुण्यात्ताम् (submetric) (for पुरा यातां) S पांडवस्य महात्मन — d) B1-4 Dc1 Dn2 D3 6 इ, B5 Dn1 D2 5 हि (for च)

पक्कानां हि वधे सूत वज्रायन्ते तृणान्यपि ॥ ४७
अनन्यमिदमैश्वर्यं लोके प्राप्तो युधिष्ठिरः ।
यस्य कोपान्महेष्वासौ भीष्मद्रोणौ निपातितौ ॥ ४८
प्राप्तः प्रकृतितो धर्मो नाधर्मो मानवान्प्रति ।
क्रूरः सर्वविनाशाय कालः समतिवर्तते ॥ ४९
अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव हि गच्छन्ति दैवादिति मतिर्मम ॥ ५०
तस्मादपरिहार्येऽर्थे संप्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ५१

इति श्रीमहाभारते द्रोणपर्वणि दशमोऽध्यायः ॥ १० ॥

# ११

संजय उवाच ।
हन्त ते वर्णयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
यथा स न्यपतद्द्रोणः सादितः पाण्डुसृञ्जयैः ॥ १
सेनापतित्वं संप्राप्य भारद्वाजो महारथः । C. 7 415 B 7 12.2 K. 7 12.2

---

47 a) G1 M यथा (for तथा) D7 8 प्राज्ञ॰ (for प्राप्त) Ś1 K1-4 तथा च सत्कृतेनाह्नो, B1 2 Dc1 D1 2 सत्कृते चाप्यनुप्राप्त॰ —b) D2 एव (for एष) D7 संजय, D8 सञ्जय, G3 8 सदाय॰ (for सञ्जय॰) —c) B1. 3 (both marg) S-. Dc1 Dn1 पापानां, Dn2 D3 4 6-8 बधूला (for पक्कानां) K3-4 D1. 2 हि तृणा, D4 7 8 सक्षय (for हि वधे) —d) D4 वज्रायति (for वज्रायन्ते) K4 तृणा मन्ये, D1 तृणान्युत (for तृणान्यपि). D7 8 विदूर्यंते तृणामपि

48 a) B D1 S अनतम् (for अनन्यम्) —b) T G3 4 काल॰ (for लोके) —c) B3 क्रोधान्; B3 कोपे (for कोपान्)

49 a) D4 7 8 प्रकृतिनौ (D4 °नो), T G3-5 प्रकृतिजो (for °तितो) D8 प्राप्तस्तु प्राकृतो धर्मो —b) K1 माधवो, Dn1 T1 G3 न धर्मो; D4 नाधर्मो (for °र्मो) B Dc1 Dn2 D3 न धर्मो मामकान्प्रति —c) B1 भव, T G3 4 6 शूरा, G8 शूर (for क्रूर) T G2-5 सर्वे (for सर्वं) —d) K1-4 सप्रति, B1 (marg) मनति, Dn D2 4 7 8 समभि, D6 त नाति; G1 M सनाति (for समति-) B1 Dc1 D1 2 T G2-5 कालोयं (B1 Dc1 कालो यं, D1 2 कालोयां, G6 कालो*) नातिवर्तते

50 a) Dn1 M3 अन्यथा चिंतितो ह्य(M3 °सोप्य)र्थो; M4 °ताप्यर्था —b) G1 M तपस्विभि (for मन°) T G2-5 नरैराशापरायणै॰. —c) G3 om हि Ś1 K1-4 D2 6 प्रवर्तंते; B3 D6-8 विपर्यंते, Dn1 D1 4 प्रपद्यते, Dn2 विपत्यते, D3 विपन्यते (for हि गच्छन्ति) —d) Ś1 K1-4 B2-4 Dc1 Dn1 D4 7 8 दैवयोगान् (for दैवादिति). D5 दैवयोगात्समविन्मम, D6 दैवेनेह पिता पते

51 a) K3 D4 अपरिहार्यर्थे —b) K1 B3-5 कृच्छ्रम्; D2 7 कृत्स्न (for कृच्छ्र) D3 सत्तमे (for उत्तमे). Dn1 प्राप्ते कृच्छ्रे यथोत्तमे; G6 संप्राप्त कृच्छ्रमुत्तम —c) S (except G1) अवार(G3 °रि)णीये (G5 °यन्) (for अपारणीये) T G2 6 M1 3 निश्चित्य, G1 निश्चित्ये (for दुश्चिन्त्ये)

Colophon om in K4 Ś2 missing —*Sub parvan* Editions द्रोणाभिषेक —*Adhy name* K1-3 धृतराष्ट्रप्रश्न, Dn D2 5 6 वासुदेव(D6 श्रीवासुदेव)प्रशंसा, D4 धृतराष्ट्रवाक्य —*Adhy no* (figures, words or both) K3 B1 2 Dn1 D8 S 10 (as in text) —*Śloka no* Dc1 52

## 11

☞ This adhy is missing in Ś2 (of v 1 7 1.1)

1 M3 4 om. the ref —After the ref S ins

87* शुश्रूषस्व स्थिरो भूत्वा शंसतो मम भारत ।
[ (G1 स्थितो (for स्थिरो) ]

—a) K3 Dc1 Dn2 D2 3 6 G2 6 कथयिष्यामि; K4 D8 संप्रवक्ष्यामि, Dn1 D4 7 8 की(D7 कि)र्तयिष्यामि; T G1 3 4 M वर्त॰ (for वर्ण॰) Cd as in text —b) Ś1 K1 3 M1 3 सर्वं, G1 M3-5 यथा (for

मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ २
यत्कौरवाणामृषभादापगेयादनन्तरम् ।
सेनापत्येन मां राजन्नद्य सत्कृतवानसि ॥ ३
सदृशं कर्मणस्तस्य फलं प्राप्नुहि पार्थिव ।
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ॥ ४
ततो दुर्योधनश्चिन्त्य कर्णदुःशासनादिभिः ।
तमथोवाच दुर्धर्षमाचार्यं जयतां वरम् ॥ ५
ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।
गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ॥ ६
ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ।
सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ॥ ७
धन्यः कुन्तीसुतो राजा यस्य ग्रहणमिच्छसि ।
न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसि ॥ ८
किमर्थं च नरव्याघ्र न वधं तस्य काङ्क्षसि ।

---

सर्वं ) Dn1 °दर्शनात् ( for °दर्शिवान् ) — [c]) K1 2 4 transp यथा and स Dn2 D3 6 सोऽभ्यपतद्; D4 7 सन्यप°; D5 सत्येप°, S सत्पपरो ( for स न्यपतद् ) — [d]) K1 सादिता , G2 पातित , G4 सूदित ( for सादित° ) D7 सजयै ( for सृञ्जयै )

2 [b]) D1 7 8 महाबल° ( for °रथ ) S द्रोणो हर्षमुपेयिवान् — [c]) Dn2 D6 सैन्यस्य सर्वस्य ( by transp ), S सैन्यस्य राजान — [d]) S इद वचनमब्रवीत्

3 Before 3, S ins द्रोण — [a]) K4 5 D1 य ( for यत् ) — [c]) K1 सैनापत्येन B3-5 यद्; G1 M1 2 मा ( for मा ) T G2 5 सेनापत्ये त्वया राजन् — [d]) D2 अथ, D5 न च ( for अद्य ) T G2 4 सत्कृतवानहं; G3 5 °वाहन ( for °वानसि ) B3 भामद्य कृतवानसि — After 3, S ins

88* अनुरूप फल तस्य कर्मणो लभ्यतां त्वया ।

4 [b]) K5 Dc1 D2 5 6-8 G3 5 6 आप्नुहि ( for प्राप्नुहि ) B2-4 Dc1 D1 भारत, Dn2 D4 मानव, D3 पांडव; G2 कौरव ( for पार्थिव ) — [c]) B5 transp करोमि and कामं Ś1 ( orig ) कामुक; Ś1 ( marg ) कर्म किं ( for काम कं ). K5 B5 Dn D2-6 T G2-5 किं ( for क ) — [d]) Dn1 वृणुष्व त्वं ( for प्रवृणीष्व ) Dn1 T G1, 3 M3 5 यदि( M3 °दी )च्छसि ( for यमिच्छसि ) Dn2 D2 6 वृणीष्व किमिहेच्छसि, G5 *णीष्व वरमिच्छसि

5 Before 5, S ins सजय° — [a]) K1 चिंत्य, B Dc1 Dn2 D5 6 S राजा, D2 चिंत्य ( for चिन्त्य ) — [c]) Dc1 Dn2 D1, 8 T G3, 4 समभ्योवाच; G1 2 5 M समभ्यो( G2 5 M3 °र्थो )वाच ( for समथो° ). — [d]) M1 2 वर° ( for वरम् )

6 Before 6, S ( except G3 ) ins दुर्योधन — [b]) K2 D4 जीवग्राह्य; Ca d °ग्राह ( as in text ) — [c]) D5 G1 रथिनं ( for रथिनां ) Dc1 Dn1 D4, 7, 8 T श्रेष्ठ ( for श्रेष्ठं ) — [d]) Dn1 S सकाशम् ( for समीपम् ) B1-3 Dc1 उपानय ( for इहानय ). — After 6, S ins

89* इच्छेय वै महात्मान धर्मात्मान युधिष्ठिरम् ।
भ्रातॄणां पश्यतामेव जीवग्राहेण मे द्विज ।
प्रीणाम्यनेन कार्येण ससुहृत्सनबान्धव° ।

[ ( L 2 ) Cv post half as above — ( L 3 ) G2-5 पूर्णो( G2 5 °र्णो )ऽस्मान ( for प्रीणाम्यनेन ) ]

7 Before 7, S ins सजय — [c]) Dn2 D5 सेना ( for सेनां ) Dn1 सर्वान्; Dn2 D2 6 राजन् ( for सर्वाम् ).

8 [a]) B1-2 5 Dn2 D1 राजन्; B1 G1 यस्य ( for राजा ) — [b]) D2 यस्य, G4 जीव ( for यस्य ) D1 7 8 त्व ग्राहम् ( for ग्रहणम् ) B3 ग्रहण त्वमिहेच्छसि — After 8[ab], D1 7 8 read 9[ab] for the first time, repeating it in its proper place — [c]) K3-4 B Dn D1 2 5 6 सुदुर्धर्ष S न वधं तस्य दुर्धर्ष. — [d]) G2 वधम् ( for वरम् ) B1 3-5 T G1 3-5 M प्रयाचसे, G2 प्रयच्छसे ( for प्रयाचसि ) D1, 8 वरमेनं न याचसे; Cv as in text

9 D1 7 8 read 9[ab] for the first time after 8[ab]. — [a]) D4 ( first time ) 7 ( both times ) 8 ( first time ) तु ( for च ) — [b]) K1 2 Dn1 M2-5 वध तस्य न; B1 वध न तस्य; D5 न वधस्तस्य ( for न वध तस्य ) B4 कांक्षसे; B5 D2 4 8 ( last two second time ) S काक्षसे ( for काङ्क्षसि ) D4 ( first time ), 7 ( both times ) 8 ( first time ) वध कर्तुं न वांछसि — [c]) D1 नाशस*; T G2-5 नाशंससे ( for °ससि ) K2 8 क्रिया; Dn1 क्षयाम् ( for क्रियाम् ) Ś1 K1-4 क्षय; K5 G1 M पूर्णा ( for पुत्तां ) — [d]) D1 यतो;, D5 laouna, T G3-5 मम; G1 M1 2 4 मयि; M3 5 मही ( for मत्तो ) K4 B1 दुर्योधनो. D4 स्वयं ( for ध्रुवम् )

नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ॥ ९
आहो स्विद्धर्मपुत्रस्य द्वेष्टा तस्य न विद्यते ।
यदिच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनि ॥ १०
अथ वा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यांशं प्रतिदत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ॥ ११
धन्यः कुन्तीसुतो राजा सुजाता चास्य धीमतः ।
अजातशत्रुता मत्या तस्य यत्स्निह्यते भवान् ॥ १२

द्रोणेन त्वेवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योऽस्य नित्यं प्रवर्तते ॥ १३
नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् ॥ १४
वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम ।
हते युधिष्ठिरे पार्थो हन्यात्सर्वान्हि नो ध्रुवम् ॥ १५
न च शक्यो रणे सर्वैर्निहन्तुममरैरपि । C 7 449 B 7 12.16 K 7 12.18

---

10 D5 7 8 read $10^{ab}$ twice — a) B3 Dn D5 6 अहो स्विद्, D5 (second time) 7 (first time) 8 (second time) अहोस्य, D7 (second time) अथ वा (for आहो स्विद्) B Dc1 D5 (second time) 7 (first time) 8 (second time) S धर्मराजस्य (for °पुत्रस्य) — b) D5 (first time) 7 (second time) 8 (first time) हिंसा (for द्वेष्टा) B3 D5 (second time) 7 8 (both first time) यस्य, T G M3 8 5 कश्चिन् (for तस्य) M1 कश्चिद्द्वेष्टा कश्चिन्न विद्यते (hypermetric) — c) Ś1 K1-3 D1 यत्त्व(K1 °त्व)मिच्छसि; K5 Dn1 D2 6 येनेच्छसि त्व, B1-4 M4 यदीच्छसि त्व, D3 G1 M1-3 5 त(D3 य)मि°, T G3-6 तदि° (for यदि°)

11 b) Dn1 पांडव — c) Ś1 राज्य मा; K4 5 B Dc1 Dn D1-3 5 राज्य म, D4 राज्य *; D7 8 राज्यार्धं (for राज्यांश) Dn1 तु (for च) D6 राज्य मथाय दत्वा च — d) D5 सांभ्राज्य; M3 4 सौमद्र, M5 सौहार्दं (for सौभ्रात्र) K5 Dn D2 8 6 अर्हसि (for इच्छसि)

12 b) B3-5 Dc1 Dn1 D1 6 T G1-4 सुजात, G5 सुजातां (for °ता) B2 4 S तस्य, D2 6 यस्य (for चास्य) — c) B5 Dn1 T G2-6 तस्य; D5 यस्य, D7 8 नित्य (for मत्या) — d) Dn2 यस्य (for तस्य) D2 यस्मिन्प्रियो, D4 *स्निह्यते; D6 हस्स्पृहाते (for यत्स्निह्यते) K1 3 तस्य यत्स्नेह्यते भयात्, S यस्य (T G3 4 येन) सस्नि(M1, 3 °स्मि)ह्यते भवान्.

13 Before 13, S (except G3 6) ins संजय — a) Ś1 B Dc1 Dn1 D1 चैवम्; K1 त्वेदम्, M3 त्वेतद् (for त्वेवम्). — c) Ś1 K1-3 D1 विस्सृतो, K4 B1 D8 Ca d निसृतो; D5 विस्सितो; G6 निर्वृतो (for निःसृतो) — d) Dn2 य स; T G1-4 यस्तु; G1 5 M यश्च (for योऽस्य) B Dc1 S (except M3, 4, M5 also as in text) हृदि स्थित (for प्रवर्तते)

14 a) K1 D4 नाकरोद्, G3 नाकार (for नाकारो) K1 न्यूहितुं; G3 गूहित (for गूहितु) Dn2 D2 नाय गृहीतु शक्यो वै — b) G5 (marg) न ह्येवाभिनिगूहितु — d) D5 [अ]पहृष्टो (for प्रहृष्टो) D7 8 पृष्टो वाक्य मथाब्रवीत

15 Before 15, Dc1 Dn1 G M3-5 ins दुर्योधन — a) D5 7 भय, D8 M3-5 [अ]स्य (for [आ]जौ) G2 वधे युधिष्ठिरस्याजौ — b) Ś1 न चाशा (for नाचार्य). S आचार्य (G3 °र्यो) न जयो मम — c) B1 D2 पार्था (for पार्थो) — d) B3 4 D2 हन्यु (for हन्यात्). B5 D5 सर्वं हि नो; D4 सर्वानपि (for सर्वान्हि नो). B5 बल (for ध्रुवम्) S सर्वानस्मान्वधि(G1 M °न्हनि)ष्यति

16 a) K5 D5 न हि, D4 6-8 न स; S नैव (for न च) B D2 शक्या (for शक्यो) K4 B1-4 Dc1 सर्वे, B4 D2 पार्था, D6 पार्थो, D7 सर्वैर् (for सर्वैर्) — b) K1 निहतुंम् (for निहन्तुम्) — After $16^{ab}$, S ins

90* यदि सर्वे हनिष्यन्ते पाण्डवाः ससुता मृधे ।
ततः कृत्स्नं वशे कृत्वा निःशेषं नृपमण्डलम् ।
समागरवनां स्फीतां विजित्य वसुधामिमाम् ।
विष्णुर्दास्यति कृष्णायै कुन्त्यै वा पुरुषोत्तमः ।

[(L 2) M1-4 क्षिप्र, M5 क्षत्र (for कृत्स्न) Cv कृत्य (for कृत्वा) — (L. 4) M3-5 कृत्स्नां वै (for कृष्णायै) M3 5 स (for वा) ]

— c) D7 8 T G3 4 एप (for एव). K2 B Dc1 Dn2 D2-4 6 तेषां (for चैषां) K1 शोम (sic) (for शेष) D5 यथेक एव; G1 M यथेक ए(M1 °को ये)षां; G2, 5 यथैप चैषां (for य एव चैषां). — d) K4 5 Dn2 D1 8 G2 सर्वान् (for स एव). M1 2 अशेषयेत् (for न शेष°). Ś1 K3 8 D5 6 G4 5 सर्वानस्मान(K3 °र्थान ; D6 °स्मान्स)शेषयेद्, K1 सर्वांश्चसत्वशोषयन्; Dn1 D7 8

य एव चैषां शेषः स्यात्स एवास्मान्न शेषयेत् ॥ १६
सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ।
पुनर्यास्यन्त्यरण्याय कौन्तेयास्तमनुव्रताः ॥ १७
सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ।
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् ॥ १८
तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् ।
तं वरं सान्तरं तस्मै ददौ संचिन्त्य बुद्धिमान् ॥ १९

द्रोण उवाच ।

न चेद्युधिष्ठिरं वीर पालयेदर्जुनो युधि ।
मन्यस्व पाण्डवं ज्येष्ठमानीतं वशमात्मनः ॥ २०
न हि पार्थो रणे शक्यः सेन्द्रैर्देवासुरैरपि ।
प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहम् ॥ २१
असंशयं स शिष्यो मे मत्पूर्वश्चास्त्रकर्मणि ।
तरुणः कीर्तियुक्तश्च एकायनगतश्च सः ॥ २२
अस्त्राणीन्द्राच्च रुद्राच्च भूयांसि समवाप्तवान् ।
अमर्षितश्च ते राजंस्तेन नामर्षयाम्यहम् ॥ २३
स चापक्रम्यतां युद्धाद्येनोपायेन शक्यते ।
अपनीते ततः पार्थे धर्मराजो जितस्त्वया ॥ २४

---

सोऽस्मान्सर्वानशेषयेत्, T G3 एष वास्मान्न शेषयेत्, M3-5 स वा चास्मान्न शेषयेत्

17 [a]) Ś1 K1-3 च (for तु) —[b]) D6 द्यूतवि (for द्यूतेन) —After 17[ab], S ins

91* वसिष्ठजीवति चानीते ह्युपायैर्बहुभि कृते ।

[T G3 आनीते; G6 चायाते (for चानीते) G1 M3-5 [ऽ]प्युपायैर् (for ह्युपायैर्) M3-5 कृते (for कृते)]

—[c]) K4 योज्यति (for यास्यन्ति) D6 पुनर्यास्यत एवाय, S पुनरेष्यत्यरण्यानि —[d]) B Dc1 D2 4 पाण्डवास् (for कौन्तेयास्) K1 कौंतेयमस्य निर्गम

18 K1 om 18 —[c]) S नित्यो (M3 4 °त्या) (for व्यक्तं) —[d]) D6 कस्यचित (for कर्हिचित्).

19 Before 19, S ins संजय —[b]) Ś1 K1-4 B D7 8 [ऽ]र्थ (for ऽर्थं) —[c]) Ś1 उत्तर (for त वर)

20 D4 om the ref —[a]) S कुंतीसुत (for युधिष्ठिर) B1 5 Dc1 Dn2 D3 8 6-7 वीर, B3 4 Dn1 D1 वीर°; S पार्थ (for वीर) —[b]) B D1 पालयति (for पालयेद्) G3 यदि (for युधि) M3 5 अर्जुनः पालयिष्यति —[c]) T G2-6 मन्येह (for मन्यस्व) K3-5 B Dn D2-4 6-8 G1 M मन्यस्व पाण्डवश्रे( K4 6 Dn D6 °ज्ये )ष्ठम्

21 [a]) B3 स (for हि) B Dc1 शक्यो (for पार्थो) B1-4 Dc1 पार्थ, B5 जेतु, T1 G1 3 4 6 M यत्त, T2 यत्त, G3 युक्त (for शक्य) —[b]) D6 सर्वैर्; S शक्यो (for सेन्द्रैर्) K4 D4 6 7 8 युधि (for अपि) B5 Dn1 पार्थ सेंद्र° (Dn1 सेंद्रैरपि) सुरासुरै —After 21[ab], D6 ins

92* स्थिते पार्थे धर्मराजो नैव शक्यो मया रणे ।

—[c]) K1 D7 प्रत्युद्यातम्, D5 प्रत्युद्यातम् (corrupt) (for प्रत्युद्यातुम्). K5 हतस्तात; Dn1 अतते धै (sic) (for अतस्तात) Dn1 D2 तत पार्थे धर्मराजे, D4 प्रत्युतयानुमतस्तात (sic) —[d]) S नैतस्माद्( G4 नैता स्माद् )र्षयाम्यह

22 [a]) K3 D5 om स B1-4 Dc1 स हि शूर कृता स्त्रश्च. —[b]) Dn1 मत्पूर्वस्य (for °र्वश्च) K1 2 D1 शास्त्रकर्मणि; K4 Dn2 D3 S शास्त्र°; D7 Cv चास्त्र क° (for चास्त्रक°) —[c]) B Dc1 D6 सुकृतीयुक्त, D5 कीर्तियुक्ताश्च; S सुकृती युक्त (M3-5 यत्त) (for कीर्तियुक्तश्च) —[d]) Ś1 K3 4 D1 6 7 8 [अ]प्येकायन, D3 [अ]प्येकाप्रातु; Ca d v cite एकायन (as in text). B1 3 4 Dc1 ह, D1 य (for स).

23 [a]) K4 D7 अस्त्राणींद्राश्च K1 रुद्रश्च, K5 D1 रुद्राश्च, B3 lacuna, D7 8 रुद्राश्च (for रुद्राच्च) —[b]) K1 4 5 D1 भूयश्च, K3 5 B Dc1 Dn D2 4 भूय स; D6 [अ]भूय स (for भूयासि) D1 6-8 भूयः समभ्यगवाप्तवान्, T G2-5 भूयांसि समुपात्तवान् —B1 reads 23[cd] twice —[c]) K3 अमर्षितस्ते, Dc1 अमर्षतश्च, T G1 अमर्षित च (for °तश्च) K3 transp ते and राजस् —[d]) B (B1 both times) Dc1 D3 ततो (for तेन) K5 S ससत (K5 ते ततो; G1 M ततस्त; G4 न तेद) मर्षयाम्यह

24 [a]) Ś1 K D6 चापक्रा( K3 4 D6 °क्र )मितु; B1-4 G5 स्वपक्र( B1-3 °क्रा )म्यता; Dc1 D7 चापक्राम्यतां, T G1-4 M स्वपाक्रम्यतां (for चाप°). B3 Dn2 D3 6 युद्धे (for युद्धाद्) —[b]) K1 यो नोपायेन (sic), Dn1 अन्योपायेन (for येनो°) —[c]) Dn1 अपक्रांते (for अपनीते) M3-5 भवेत् (for तत).

25 [a]) D7 8 ग्रहेन (for ग्रहण). T G2-5 हि यथा;

ग्रहणं चेज्जयं तस्य मन्यसे पुरुषर्षभ ।
एतेन चाभ्युपायेन ध्रुवं ग्रहणमेष्यति ॥ २५
अहं गृहीत्वा राजानं सत्यधर्मपरायणम् ।
आनयिष्यामि ते राजन्वशमद्य न संशयः ॥ २६
यदि स्थास्यति संग्रामे मुहूर्तमपि मेऽग्रतः ।
अपनीते नरव्याघ्रे कुन्तीपुत्रे धनंजये ॥ २७
फल्गुनस्य समक्षं तु न हि पार्थो युधिष्ठिरः ।
ग्रहीतुं समरे शक्यः सेन्द्रैरपि सुरासुरैः ॥ २८

संजय उवाच ।

सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ।
गृहीतं तममन्यन्त तव पुत्राः सुबालिशाः ॥ २९
पाण्डवेषु हि सापेक्षं द्रोणं जानाति ते सुतः ।
ततः प्रतिज्ञास्थैर्यार्थं स मन्त्रो बहुलीकृतः ॥ ३०
ततो दुर्योधनेनापि ग्रहणं पाण्डवस्य तत् ।
सैन्यस्थानेषु सर्वेषु व्याघोषितमरिन्दम ॥ ३१ C 7 464 B 7 12.31 K 7 12.34

इति श्रीमहाभारते द्रोणपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

$G_1$ हि वधान्, $M_{2-8}$ हि वधन् (for चेज्जय) $Ś_1$ $K_{1-3}$ $D_1$ वध, $K_4$ त च (for तस्य) B $Dc_1$ ग्रहणे हि जय स्तस्य, $M_{1\ 2}$ ग्रहण हि वधार्थंस्य — b) B $Dc_1$ $D_3$ न वधे (for मन्यसे) S धर्मराजस्य मन्यसे — c) $K_1$ ये तेन (for एतेन) $K_{3\ 4}$ B $Dc_1$ $Dn_1$ $D_{1-3}$ $M_{3-8}$ चा ($D_2$ वा)प्युपायेन, $K_6$ $Dn_2$ चाप्युपायेन T $G_{2-6}$ अनेनैवाप्यु($T_2$ व ह्यु)पायेन — d) $Dc_1$ क्षिप्र (for ध्रुव) $Ś_1$ K Dn $D_{1-3}$ ग्रहण मनुपै($Ś_1$ $K_4$ $Dn_1$ $D_1$ °पै)ष्यति

26 b) S सत्यवादिनमाहवे — d) $D_2$ शमम् (for वशम्)

27 a) $D_{6\ 7}$ स्थास्यति (for स्थास्यति) — b) $D_{1\ 2}$ तेऽग्रत, S पांडव (for मेऽग्रत) — c) $D_2$ अपयाते, $D_8$ आनीतेन (for अपनीते) $Ś_1$ (before corr, sup lin as in text) तव पार्थे (for नरव्याघ्रे) — d) $D_7$ $G_6$ कुंतीपुत्रो $D_4$ धनंजय°

28 a) $K_1$ $D_6$ फाल्गुणस्य, B $Dc_1$ Dn $D_{1-6\ 7\ 8}$ फाल्गुनस्य; $G_1$ M अर्जुनस्य (for फल्गुनस्य) $B_1$ $D_{1\ 7\ 8}$ समीपे, $Dc_1$ ममक्षे (for समक्षं) $Dn_1$ हि (for तु) — b) B $Dc_1$ $Dn_2$ $D_{2\ 8\ 6}$ S शक्यो (for पार्थो) — c) A few MSS गृहीतु $K_3$ B $Dn_2$ $D_{1\ 2\ 6}$ S राजन्, $K_4$ शक्य (for शक्य°)

29 $G_2$ om. the ref After the ref S ins

93* एवमुक्ते तदा तस्मिन्युद्धे देवासुरोपमे ।

— Bom ed repeats 29$^{ab}$ after the ref in 7 12 1 — a) $K_3$ सातुर, $K_6$ $Dn_1$ $D_{2-3}$ Bom ed सातरे (for सान्तर) $G_3$ $M_{1\ 2}$ प्रतिज्ञा ते — b) $K_1$ $B_3$ $D_2$ $G_1$ Ca निग्रहे, $D_8$ निग्रह, Cd निग्रहे (as in text) — c) $D_3$ ग्रहीतु (for गृहीत) S एवा($M_4$ °व)मन्यत (for तमम) — d) $K_4$ सुबालिसा°, $G_3$ च बालिशा (for सुबा°) $Dn_1$ तव पुत्रो युधिष्ठिर

30 S transp 30 and 31 — a) $B_3$ $Dn_1$ $D_{8\ 6}$ च (for हि) — b) $K_{1-3}$ $D_8$ जानामि (for जानाति) — d) $D_1$ वहलीकृत°, Ca d बहु° (as in text) T $G_{2-4}$ स तु मन्त्रो बलीकृत°, $G_6$ समन्य बहुलीकृत

31 a) $D_8$ ततोपि (for ततो) S दुर्योधनश्चापि — b) $D_{4\ 7\ 8}$ तु (for तत्) — After 31$^{ab}$, S ins

94* स्कन्धावारेषु सर्वेषु यथास्थानेषु मारिष ।

— c) $M_{3\ 4}$ om. सर्वेषु — d) $D_{2\ 6}$ सुघोषितम् (for व्याघो) $D_4$ घोणापितमनिंदित (sic), S घोषयामास पार्थिव ($M_{3-5}$ सर्वशः°)

Colophon $Ś_2$ missing — *Sub parvan* Editions द्रोणाभिषेक — *Day of Drona's Generalship* $K_2$ प्रथमदिवसे — *Adhy name* $K_6$ $Dn_1$ $D_6$ युधिष्ठिरग्रहणमन्त्र, $D_8$ दुर्योधनवरप्रदान, $D_4$ द्रोणवरप्रदान, $D_6$ युधिष्ठिरग्रहण, $G_1$ $M_{1\ 2}$ जीवग्राहप्रतिज्ञान, $G_5$ द्रोण प्रतिज्ञा — *Adhy no* (figures, words or both) $K_2$ $B_{1\ 2}$ $Dn_1$ $D_8$ T $G_{1-4}$ M 11 (as in text), $K_3$ $G_5$ 12 — *Śloka no* $Dc_1$ 31, $Dn_1$ 32

# १२

संजय उवाच ।
ततस्ते सैनिकाः श्रुत्वा तं युधिष्ठिरनिग्रहम् ।
सिंहनादरवांश्चक्रुर्बाणशङ्खरवैः सह ॥ १
तत्तु सर्वं यथा वृत्तं धर्मराजेन भारत ।
आप्तैराशु परिज्ञातं भारद्वाजचिकीर्षितम् ॥ २
ततः सर्वान्समानाय्य भ्रातॄन्सैन्यांश्च सर्वशः ।
अब्रवीद्धर्मराजस्तु धनंजयमिदं वचः ॥ ३
श्रुतं ते पुरुषव्याघ्र द्रोणस्याद्य चिकीर्षितम् ।
यथा तन्न भवेत्सत्यं तथा नीतिर्विधीयताम् ॥ ४
सान्तरं हि प्रतिज्ञातं द्रोणेनामित्रकर्षण ।
तच्चान्तरममोघेषौ त्वयि तेन समाहितम् ॥ ५
स त्वमद्य महाबाहो युध्यस्व मदनन्तरम् ।
यथा दुर्योधनः कामं नेमं द्रोणादवाप्नुयात् ॥ ६
अर्जुन उवाच ।
यथा मे न वधः कार्य आचार्यस्य कथंचन ।
तथा तव परित्यागो न मे राजंश्चिकीर्षितः ॥ ७
अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि ।
प्रतीयां नाहमाचार्यं त्वां न जह्यां कथंचन ॥ ८

---

## 12

☞ $Ś_2$ is missing for this adhy. (cf v 1 7 1 1).

1 $T_2$ om the ref After the ref, Bom ed repeats 7 11 29$^{ab}$. —$^{a}$) $K_{1.3.4}$ ते तत (by transp), $K_2$ ते तस्मै $D_4$ दृष्ट्वा (for श्रुत्वा). —$^{b}$) $D_8$ तद् (for त). $Dn_1$ -विनिग्रह (for -निग्रहम्) —$^{d}$) $B_4$ यान, $Dn_2$ $D_8$ पाद्य-; $D_1$ चाप (for बाण) $M_8$ om शङ्ख $K_2$ शब्दरवै (for शङ्ख°)

2 $^{a}$) $Ś_1$ $K_{1-4}$ $Dn_1$ $D_1$ तत्र, $Dn_2$ $D_8$ त तु; $D_{2.5.6}$ तच्च; T $G_{2-5}$ तत (for तत्तु) $D_2$ -न्यायं (for वृत्त) —$^{b}$) $G_2$ धार्तराष्ट्रेन (for धर्मराजेन) $Ś_1$ lacuna for भारत. —$^{c}$) $Ś_1$ lacuna, $K_{1-3}$ $D_1$ चरैर्; Cd आप्तैर् (as in text) $D_6$ एव, S चारै (for आशु) $K_6$ $G_1$ प्रतिज्ञात (for परि°).

3 $B_4$ reads 3$^{ab}$ twice —$^{a}$) $Do_1$ अनुज्ञाप्य; $Dn_1$ समानाय; S समानीय (for समानाय्य) $Ś_1$ $K_{1-4}$ तत स ($Ś_1$ $K_4$ om स) सर्वान्नानाय —$^{b}$) $K_1$ $G_6$ सर्वांश्च; $K_3$ B ($B_4$ both times) $Do_1$ $D_2$ अन्यांश्च; $K_4$ सैन्यश्च; $K_5$ $D_{1.5}$ सैन्याश्च; $D_8$ सैन्य च; $D_{7.8}$ सैन्यास्तु (for सैन्यांश्च) $Ś_1$ सर्वत; T $G_{2-6}$ भारत (for सर्वशः) $G_1$ M भ्रातृन्सैन्याधिपानपि. —$^{c}$) $K_3$ $D_{2.5}$ त; S वै (for तु).

4 Before 4, S (except $G_4$) ins युधिष्ठिर. —$^{a}$) $Ś_1$ $Dn_1$ $D_{4-8}$ मे (for ते). —$^{b}$) $K_4$ $Dn_2$ $D_8$ द्रोणस्यास्य; $Dn_1$ M यद्द्रोणस्य; $D_8$ ह्रद्रोस्याद्य (sic), T $G_{2-5}$ द्रोणस्य च (for द्रोणस्याद्य) —$^{c}$) $D_{4.7.8}$ यथा तथ्येन तच्च स्यात् —$^{d}$) $D_8$ om था.

5 $^{a}$) $Dn_1$ यत्; S तु (for हि) $D_6$ प्रतिज्ञात —$^{b}$) $K_1$ $B_{1.3.4}$ $D_5$ कर्षणा, $K_{2.3}$ $B_2$ $Dn_2$ $D_{1-3}$ -कर्षण, $K_4$ कर्मणां; $B_2$ -कार्षिणा, $Dn_1$ $D_{6-8}$ $M_{3-5}$ कर्शिना; $D_4$ कर्शणा; T G $M_{1.2}$ घातिना (for कर्षण). —$^{c}$) $K_1$ अमोघेऽत्र (sic), $K_4$ ममोघोपौ; $K_5$ अयाद्योपा; $B_1$ महेष्वास; $B_{2-4}$ $Do_1$ $D_1$ महेष्वास; $Dn_1$ अमोघास्तैस्; $Dn_2$ $D_8$ अनाहृत्ये; $D_{2.6-8}$ S (except T) अमोघेषो (for °घेषौ) $D_4$ तथांतरममो **, $D_5$ अयांतरममोघो वै —$^{d}$) $Dn_2$ $D_{8.6}$ सुसहित (for समाहितम्) $K_5$ श्रूयते सुसमाहित

6 $^{b}$) $Dn_2$ $D_6$ सदनंतर; Cd v मदनन्तरम् (as in text). —$^{c}$) $Ś_1$ यथा ग्रहणजो दोषो, $K_{1-4}$ $D_1$ यथा ग्रहणज दो($K_4$ जो)ष —$^{d}$) $Ś_1$ $Dn_1$ न मां; $K_{1-4}$ $D_1$ नाहं. $K_5$ $B_1$ नैनं, $M_{1.2}$ नष्ट; $M_{3-5}$ नेष्ट (for नेमं) $K_3$ $D_1$ अवाप्नुया; $D_8$ अवाप्तवान् (for अवाप्नुयात्).

7 $^{a}$) $B_1$ S (except T $G_{1.2}$) transp मे and न —$^{d}$) $D_{7.8}$ मम (for न मे) $Dn_2$ चिकीर्षित

8 $^{a}$) $K_5$ अथैव; $B_1$ अप्येव; $Dn_1$ अथैवं; $Dn_2$ $D_{8.6}$ S अथैव; $D_7$ यथैवं (for अप्येव) $K_1$ $D_4$ पांडवे, $D_2$ lacuna, $D_6$ पांडव —$^{b}$) $G_8$ उत्सृजेयुर् (for उत्सृजेयम्) —$^{c}$) B $Do_1$ $D_2$ Cd प्रतीपो; $D_{4.7.8}$ गृह्णीयां $D_6$ Cd आचार्यं T $G_{3.4}$ प्रतियाम्यहमाचार्यं; $G_{1.5}$ M प्रतियातास्माचार्यं; $G_2$ प्रतियाता महाचार्यं —$^{d}$) $K_6$ त्वां च; B $Do_1$ $Dn_2$ $D_{4.7.8}$ त्वां वा; $D_8$ त्वां नो, $D_5$ त्व च; $G_4$ तच्च (for त्वां न). $K_{3.8}$

त्वां निगृह्याहवे राजन्धार्तराष्ट्रो यमिच्छति ।
न स तं जीवलोकेऽस्मिन्कामं प्राप्तः कथंचन ॥ ९
प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ।
न त्वां द्रोणो निगृह्णीयाज्जीवमाने मयि ध्रुवम् ॥ १०
यदि तस्य रणे साह्यं कुरुते वज्रभृत्स्वयम् ।
देवैर्वा सहितो दैत्यैर्न त्वां प्राप्स्यत्यसौ मृधे ॥ ११
मयि जीवति राजेन्द्र न भयं कर्तुमर्हसि ।
द्रोणादस्त्रभृतां श्रेष्ठात्सर्वशस्त्रभृतामपि ॥ १२
न स्मराम्यनृतां वाचं न स्मरामि पराजयम् ।
न स्मरामि प्रतिश्रुत्य किंचिदप्यनपाकृतम् ॥ १३

संजय उवाच ।

ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह ।
प्रावाद्यन्त महाराज पाण्डवानां निवेशने ॥ १४
सिंहनादश्च संजज्ञे पाण्डवानां महात्मनाम् ।
धनुर्ज्यातलशब्दश्च गगनस्पृक्सुभैरवः ॥ १५
तं श्रुत्वा शङ्खनिर्घोषं पाण्डवस्य महात्मनः ।
त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे ॥ १६
ततो व्यूढान्यनीकानि तव तेषां च भारत ।
शनैरुपेयुरन्योन्यं योत्स्यमानानि संयुगे ॥ १७
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् । C. 7 484 B 7 13 19 K. 7 13 19

D1 जह्ये, K4 ह्येक, D8 G4 जह्यात् (for जह्यां) Ś1 K1–4 D1 कदाचन (for कथ°) D2 भवेय यैं कथचन

9 a) Dn1 [आ]वहे (for [आ]हवे) B2 4 5 Dn2 D1–3 M4 राज्यं (for राजन्), — b) K1 यमिच्छत, K5 D2 यदिच्छति; D4 यदीच्छसि; D6 यदिच्छसि (for यमिच्छति) — D7 8 om. $9^{c}$–$10^{d}$ — c) K5 Dn1 D2 5 च (for स) G1 M1–3 तज् (for तं) — d) K4 T G3 काम; G4 कर्मं (for काम) K2 प्रति, K5 प्राप्तात्; B1 2 5 Dc1 D2–4 G5 प्राप्ता, B3 प्राप्ते, Dn1 लब्धा, Dn2 प्राप्य; D1 प्राप्ये, M1. 2 प्राप्त (for प्राप्त) Ś1 कदाचन (for कथ°) G2 काम सम्य गवाप्नुयात्

10 With $10^{ab}$, cf 5 80 $48^{ab}$ D7 8 om. 10 (cf. v l 9) — a) K1 Dc1 Dn1 D4–6 T प्रपते, K4 प्रतपेद्, M3–5 निपतेद् (for प्रपतेद्) K1 सन क्षत्र — b) K1 सकली-; Cd शकली- (as in text) — c) K1. 2 M1–3 5 त्वा, T त्वाद् (for त्वां) D6 विगृह्णीयाज् (for निगृ°) — d) G1 M1. 2 ध्रुव (for ध्रुवम्)

11 a) D7 8 कुरु(D8 °रू)णां समरे साह्यं — K3 om. $11^{c}$–$12^{b}$ — c) B Dc1 S विष्णुर् (for देवैर्) D1 सहितैर् (for सहितो) B Dc1 S देवैर्, D6 विष्णुर् (for दैत्यैर्) D7 8 देवा चा(D8 om. चा)-सहीता दैत्यैर् — d) K1 G5 त्वा (for त्वां) T G3 M5 प्राप्नोति, G1 2 M1–4 प्राप्तो हि; G4 5 प्राप्ता हि (for प्राप्स्यति) D6 S रणे (for मृधे).

12 K3 om $12^{ab}$ (cf. v l. 11) — b) Dn1 विद्यते तव, Dn2 D8 कर्तुमिच्छसि (for °मर्हसि) — c) Dn1 मन्त्रविदां (for °भृतां) M1. 2 श्रेष्ठान् (for श्रेष्ठात्) — After 12, B D (except D1. 4 5 7) Bom ed. ins

95* अन्यच्च श्रूयां राजेन्द्र प्रतिज्ञां मम नित्यदा ।

[B2 3 Dn2 D3 प्रतिज्ञा (for °ज्ञा) Bom ed निश्चलां (for नित्यदा)]

13 K5 om $13^{a}$ — a) K4 अनृत तावन्, Dc1 अनृता वाचा, D2 अनृता वाणीं, T G2–5 अनृत प्रोक्तं, G1 M अनृत कर्तुं (for अनृता वाच) — d) D7 om अपि K4 अन्यथा कृत; K5 D5 7 8 अनुपाकृतं, B Dc1 Dn2 D8 Ca अनृत कृत (for अनपाकृतम्) S विस्मृत्य मनसा कृत

14 T om the ref. — a) Ś1 तत्र (for तत) K1 D4 शस्वश्च — b) D3 8 तु (for च) S मृदं गाश्च सहस्रश — c) K4 5 Dn2 D5 G2 5 प्रवाद्यत (for प्रावा°) Ś1 महारण्ये (for महाराज)

15 a) K1 Dn1 D7 G1 M सिंहनादाश्च (for °नादश्) T G2–5 सजात, G1 M सजज्ञु (for संजज्ञे) — b) G5 निवेशने (for महात्मनाम्) — d) G3 सुभैरम (for °व)

16 a) B3 सिंह- (for शङ्ख) — b) D4. 7 8 पाण्डवानां (for पाण्डवस्य) K5 B1. 2 5 Dn2 D1–3 महौजस; B3 महायश; D4 6–8 महौजसां (for महात्मन) S पांडवेयस्य धीमत — c) S सैन्येषु (for [अ]नीकेषु). — d) G4 [अ]पि (for [अ]भि) Ś1 K1. 5 B1 D3 -जघ्निरे (for जघ्निरे)

17 a) K4 D1 [अ]नेकानि, T G2–5 सैन्यानि (for [अ]नीकानि)

18 b) Dn1 D4, 6, 7 8 तुमल (for तुमुलं). Ś1 S

पाण्डवानां कुरूणां च द्रोणपाञ्चाल्ययोरपि ॥ १८
यतमानाः प्रयत्नेन द्रोणानीकविशातने ।
न शेकुः सृञ्जया राजंस्तद्धि द्रोणेन पालितम् ॥ १९
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
न शेकुः पाण्डवीं सेनां पाल्यमानां किरीटिना ॥२०
आस्तां ते स्तिमिते सेने रक्ष्यमाणे परस्परम् ।
संप्रसुप्ते यथा नक्तं वनराज्यौ सुपुष्पिते ॥ २१
ततो रुक्मरथो राजन्नर्केणेव विराजता ।
वरूथिना विनिष्पत्य व्यचरत्पृतनान्तरे ॥ २२
तमुद्यतं रथेनैकमाशुकारिणमाहवे ।
अनेकमिव संत्रासान्मेनिरे पाण्डुसृञ्जयाः ॥ २३
तेन मुक्ताः शरा घोरा विचेरुः सर्वतोदिशम् ।
त्रासयन्तो महाराज पाण्डवेयस्य वाहिनीम् ॥ २४
मध्यंदिनमनुप्राप्तो गभस्तिशतसंवृतः ।
यथादृश्यत घर्मांशुस्तथा द्रोणोऽप्यदृश्यत ॥ २५
न चैनं पाण्डवेयानां कश्चिच्छक्नोति मारिष ।
वीक्षितुं समरे क्रुद्धं महेन्द्रमिव दानवाः ॥ २६
मोहयित्वा ततः सैन्यं भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नबलं तूर्णं व्यधमन्निशितैः शरैः ॥ २७
स दिशः सर्वतो रुद्ध्वा संवृत्य खमजिह्मगैः ।
पार्षतो यत्र तत्रैव ममृदे पाण्डुवाहिनीम् ॥ २८

इति श्रीमहाभारते द्रोणपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

---

(except $G_6$) रोमहर्षण (for लोम°) — [c]) $D_8$ पांडवानां च (*hypermetric*) (for पाण्डवानां) — [d]) $B_8$ Dn $D_{4\,6\,8}$ S (except $G_4$) पांचालयोर् (for पाञ्चाल्ययोर्)

19 [b]) $K_1$ द्रोणानेक, $D_3$ °नीके, $D_6$ T $G_{2-6}$ °नीक (for °नीक) $K_{1-3}$ $D_2$ निशातने, $K_6$ $D_5$ T $G_{2-5}$ विशां पते; $B_{1\,2\,5}$ विशातन, $B_3$ $Dn_2$ $D_8$ विनाशने; $B_4$ विनाशन (for विशातने) — [c]) $D_7$ सजया (for सृञ्जया) $B_4$ $D_2$ युद्धे (for राजंस्) — [d]) $Dn_2$ $D_{8\,6}$ तद्वै, $D_{4\,8}$ मूर्ध्नि (for तद्धि) $K_6$ तद्धिद्धि द्रोणपालित

20 [a]) T $G_{3\,4}$ धार्तराष्ट्रस्य (for तव पुत्रस्य) — [b]) $M_{3\,4}$ रथोदारान् (for °दाराः)

21 [a]) $D_2$ आस्थिते; $D_4$ अश्रांते (for आस्तां ते). $D_{7\,8}$ सैन्ये; T $G_{2-4}$ आस्तां; $G_1$ $M_{3-5}$ चास्तां; $M_{1\,2}$ चांतां (for सेने) $G_5$ ते सेनेस्तमितेयुक्ता ❀ Cd स्तिमिते, स्तिमितव्यापारे। ❀ — [b]) $K_{1\,6}$ $B_2$ D (except $Dc_1$ $D_{1\,3\,5}$) रक्षमाणे; $K_4$ रक्ष्यमाने; S कांक्षमाणे (for रक्ष्यमाणे). — [c]) $D_8$ सम्प्रयुक्ते; T $G_{2-4}$ समासक्ते, $G_5$ समासत्ते (for संप्रसुप्ते) — [d]) $K_3$ वनराज्य; $D_{4\,7,\,8}$ $G_{2-4}$ $M_{3-5}$ °राजी, T $G_{1\,5}$ °राजि (for °राज्यौ) $D_5$ वनराजीव पुष्पिते

22 [a]) $G_5$ द्रोणो रथे (for रुक्मरथो) $D_6$ साजाव् (sic) (for राजन्) — [b]) $K_3$ $B_3$ $D_4$ अर्केनेव, $B_4$ रथेनैव; $Dn_1$ अर्केण च; $D_2$ T $G_{2-4}$ अर्केणैव (for °णेव) $K_4$ $B_1$ $D_2$ $G_3$ विराजिता (for °जता) $D_6$ अर्कवाद्धि विराजते — [c]) $B_{3\,5}$ $Dn_1$ $D_5$ वरूथिनी, $Dn_2$ वरूथिनीं, Ca d वरूथिना (as in text) $Ś_1$ $K_{1-3}$ वरूथिनावनिष्पत्य, $D_6$ वरूथिनीं विनिःपात्य. — [d]) $D_{4\,6}$ व्यचरन् (for व्यचरत्)

23 [a]) $K_{3-5}$ B $Dc_1$ $Dn_2$ $D_{7\,8}$ $G_{3\,4\,5}$ तमुद्यंत, $D_4$ तमुद्यत, $D_6$ तमुद्यत (for तमुद्यत) $D_5$ त रुक्म रथमेक वै

24 [a]) $Ś_1$ शरव्राता, $K_{1\,2\,4}$ शरा राजन्, $Dn_1$ शरा दिव्या (for शरा घोरा) — [b]) $Ś_1$ $K_{1-4}$ $B_{1\,2}$ $Dc_1$ $D_1$ $M_5$ सर्वतोदिशः (for °दिशम्). — [c]) $Ś_1$ $K_4$ नाशयतो, $K_1$ घासयंतो, $K_{2\,3}$ वासयतो (for त्रासयन्तो) — [d]) $Ś_1$ $K_1$ पांडवीयस्य, $Dn_3$ $D_{3,\,6}$ पांडवस्य च (for पाण्डवेयस्य)

25 [a]) $K_{2\,3\,4}$ B $Dc_1$ Dn $D_{1-4\,7}$ T $G_2$ यथा दृश्येत; $D_6$ यथा दृश्यति (for यथादृश्यत) — [d]) $K_2$ $Dc_1$ [ऽ]स्य दृश्यत, $D_{4\,7\,8}$ $G_1$ M ऽप्यदृश्यत (for ऽप्यदृश्यत) $D_2$ तथासौ समदृश्यत, $D_6$ तथा स प्रत्यदृश्यत

26 [a]) $B_3$ चैवं (for चैनं) — [b]) $K_1$ शक्नोहि, $D_7$ क्षुक्नोति (sic) (for शक्नोति) B $Dc_1$ $Dn_2$ S भारत, $D_1$ मारिप, $D_8$ मानुष (for मारिष) — [c]) $K_4$ वीक्ष्य स; $Dn_2$ वीक्षतु. $M_{4\,5}$ ईक्षितु (for वीक्षितुं) T क्रुद्धो (for क्रुद्धं) — [d]) $D_2$ दानव°

27 [a]) $Dn_2$ $D_{8\,6}$ तु तत् (for ततः) T $G_{2\,3}$ सेनां; $G_5$ सेना (for सैन्यं). — [c]) $D_4$ दृष्टद्युम्न (for धृष्ट°) $K_5$ सैन्य; $G_1$ M सर्वं (for तूर्णं).

# १३

संजय उवाच ।
ततः स पाण्डवानीके जनयंस्तुमुलं महत् ।
व्यचरत्पाण्डवान्द्रोणो दहन्कक्षमिवानलः ॥ १
निर्दहन्तमनीकानि साक्षादग्निमिवोत्थितम् ।
दृष्ट्वा रुक्मरथं युद्धे समकम्पन्त सृञ्जयाः ॥ २
प्रततं चास्यमानस्य धनुषोऽस्याशुकारिणः ।
ज्याघोषः श्रूयतेऽत्यर्थं विस्फूर्जितमिवाशनेः ॥ ३
रथिनः सादिनश्चैव नागानश्वान्पदातिनः ।
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः ॥ ४
नानद्यमानः पर्जन्यः सानिलः शुचिसंक्षये ।
अश्मवर्षमिवावर्षत्परेषामावहद्भयम् ॥ ५
व्यचरत्स तदा राजन्सेना विक्षोभयन्प्रभुः । E 7 500 B 7 14 6 K 7 14 6

28 K4 D1 om 28[ab] —[a]) Ś1 K2 3 Dn1 D5 सवृत्ता, K1 सवृतु°, K5 संहिता, D6 सत्वरो (for सर्वतो) Ś1 K1 2 5 Dn1 D2 5 कृत्वा, Dc1 रुद्धा, Dn2 रुध्यन्, D3 रुधन्, D4 6–8 हत्वा, S गत्वा (for रुद्धा) —[b]) K5 स्वम् (for स्वम्) Ś1 ख च संवृत्य जिह्मगै° —[c]) T G2 3 5 M3–5 तत्रैनाम्, G1 M1 2 तत्रैवाम्, G4 तत्रैनम् (for तत्रैव) —[d]) K4 मम्रजे, D1 मम्रवे, T G1–3 M अभिनत्, G5 अहिनत् (for मम्रदे) G4 om पाण्डु K5 कुरुवाहिनीं, Dn1 पांडव बल, M3 पाडुवाहिनी (for °वाहिनीम्)

Colophon Ś2 missing —*Sub-parvan* Editions द्रोणाभिषेक —*Day of Drona's Generalship* K1 3 प्रथमे युद्धदिवसे, K2 प्रथमदिवसे —*Adhy name* K4 5 सेनाविमर्द, Dn1 सेनाविमर्दन, Dn2 D3 6 पांडव निर्याण, D2 सेनाप्रवर्तन, D4 युद्धप्रवर्तन, G1 M1 2 युधिष्ठिरार्जुनसंवाद —*Adhy no* (figures, words or both) K2 3 B1 Dn1 D2 8 S 12 (as in text). —*Śloka no* Dc1 Dn1 28

## 13

☞ Ś2 is missing for this adhy (cf. v l 7 1 1)

1 D2 om the ref. —[a]) Dc1 तु; D2 ते (for स) —[b]) Dc1 D4 7 8 तुमल; Dn1 सुमहन्, D5 तुमळ, Cd तुमुल (as in text) Dn1 D4 8 S भय, D7 क्षय (for महत्) —[c]) D5 अचरत्, T G2 5 M1 2 व्यधमत्, G3 4 व्ययमत् (for व्यचरत्) B पृतनां; D5 पाढवीं, G1 M पार्थिवान् (for पाण्डवान्) Dn2 D2 6 व्यचरत्पाडवानीक —[d]) Ś1 कक्ष्यम् (for कक्षम्)

2 [a]) K1 निदहतम् (for निर्दहन्तम्) —[b]) Dn1 कक्षाद् (for साक्षाद्) M4 अहिम् (for अग्निम्) K4 इह (for इव) —[c]) B D2 क्रुद्ध, T G2 3 सख्ये; G1 M यात, G4 5 सखे (for युद्धे) —[d]) K1 पांडवा (for सृञ्जया)

3 K4 D1 om 3[ab] —[a]) Ś1 प्रतित, K3 B4 Dn2 D2 3 6 S सतत (for प्रततं) Ś1 K2 च यथासख्ये, K3 B1–4 Dc1 Dn2 D2 3 कृष्यत° सख्ये; B5 Dn1 कर्षत° सख्ये; D6 चास्यत° सख्ये (for चास्यमानस्य) Cd cite स्फार्यत° (for the v l कृष्यत°) K1 यतन कुर्वत सख्ये, K5 D4 5 7 8 प्रसभ चरत सख्ये —[b]) K3 Dn1 S (except G1) [ऽ]पि, D5 तु (for ऽस्य) —[c]) G5 ज्याशब्द (for ज्याघोष) B1–4 Dc1 शुश्रुवे (for श्रूयते) —[d]) G1 3 4 M विस्फूर्जितम्, G5 विस्फारितम् (for विस्फूर्जितम्)

4 [a]) T G2 पत्तिर्, G1 3–5 M पत्तीन् (for चैव) —[b]) K5 गजान् (for नागान्) T G3–5 M द्वि(T1 द्वी)पान्द्वि(M3 °न्द्वी)पगतानपि —[c]) K2 D4 5 रौद्र, M1 3 (sup lin) रणे (for रौद्रा) B1 युक्ता (for मुक्ता) T G2–5 द्रोणचापविनिर्मुक्ता —[d]) K5 प्रम थ्यति, B1 2 प्रमृद्नति, B3 4 D1 सम्रद्नति, B5 प्रमृ जति; Dc1 प्रगृह्णति, D6 प्रदहति, T प्रमध्नति, G1 4 M प्रमथति (for °थ्नन्ति) K1 2 4 D4 च (for स्म) B D3 शायका (for सायका)

5 [a]) Ś1 D8 नानर्धमान°, K1 नानर्द्य°; D4 तान र्द°, D6 नानर्द°, Cd नानद्य° (as in text) K5 पर्जन्या —[b]) K1 B1 सालिन°, K5 सानिला, B3 4 सलिल, B5 शालिन; D5 सानिळ, T G1 3–5 M साशनि, G2 शासनि (for सानिल°) —[c]) K1 2 4 Dc1 D3 इवावर्षन्, D5 काश (for इवावर्षत्) —[d]) K1. 2 स एषाम्; Dc1 परै (submetric) (for परेषाम्) K5 चाददद्, B5 आहरन्; Dn1 D8 S आदधद्; D4 आद*द्, D5 आदधन् (for आवहद्)

6 G5 om 6–7 —[a]) K2 5 B D (except Dc1 D6 7) विचरन्, K3 T व्यचरन् (for व्यचरत्) Dn2 D8 महाराज; T G1 3 4 M दिशः सर्वा (G4 °र्वां)

कुनरैर्दुरवापान्हि लोकान्प्राप्स्यन्त्यनुत्तमान् ॥ ६
एवमुक्त्वा महाबाहुर्हृषीकेशं ततोऽर्जुनः ।
आससाद रणे व्यूढां त्रैगर्तानामनीकिनीम् ॥ ७
स देवदत्तमादाय शङ्खं हेमपरिष्कृतम् ।
दध्मौ वेगेन महता फल्गुनः पूरयन्दिशः ॥ ८
तेन शब्देन वित्रस्ता संशप्तकवरूथिनी ।
निश्चेष्टावस्थिता संख्ये अश्मसारमयी यथा ॥ ९
वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः ।
विष्टब्धचरणा मूत्रं रुधिरं च प्रसुस्रुवुः ॥ १०
उपलभ्य च ते संज्ञामवस्थाप्य च वाहिनीम् ।
युगपत्पाण्डुपुत्राय चिक्षिपुः कङ्कपत्रिणः ॥ ११
तान्यर्जुनः सहस्राणि दश पञ्चैव चाशुगैः । C 7 713 B 7 18 12 K 7 18 14

---

आद्रवस्त्रिगर्तानेव च — [d]) Ś रोषितन्ये (for रोद्रि°) S प्रहृष्य( M3 °ष्ट )त° (for प्रहर्षितान्)

6 [b]) B (except B1) D5 त्रिगर्तानाम् (for त्रैग°) Ś1 K1. 4 B1 D1 M3 समदाय, K5 Dn1 D6 T G न संदाय°, D4. 7. 8 सजायत (for असशयम्) — [c]) K1 D1 शकुनैर्, T G3. 4 ये नरैर् (for कुनरैर्) Dn2 D3 कुपुरुषैर्दुरापान्हि, D4 कुनटैर्दुरवापान्हि, D5 कुरवैर्दुरवापा हि, D8 पुनरन्यैर्दुरापान्हि — [d]) K1 D5 प्राप्स्यति S सयुगे (for [अ]नुत्तमान्) — T G1. 3-5 M ins after 6 G2 after 5[ab]

133* मया हता हि सग्रामे लोकान्प्राप्स्यन्ति पुष्कलान् ।

[T न या (for मया) G4 हता, G5 हतान् (for हता) G3 प्राप्स्यति G2 सयुगे (for पुष्कलान्) ]

7 Before 7, T G2 ins सजय — [a]) Dc1 D2. 4. 6-8 महाबाहु, D5 °बाहो, T G3 तत पार्थो, G1. 2. 4. 5 M हृषीकेशं (for महाबाहुर्) — [b]) G1. 2. 4. 5 M महाबाहुस् (for हृषीकेश) K1 धनजय (for ततोऽर्जुन) T G3 वासुदेव महाबल — [c]) S ततो (for रणे) Ś K2. 4 D1 वीरस्, K1 वीरास्, Dn1 D5. 6 व्यूहं, D8 व्यूढांस् (for व्यूढां) — [d]) S1 K3. 5 B Dc1 Dn D2. 5. 6 G2 त्रिगर्तानाम् (for त्रैग°) Ś1 K1. 2 पताकिनीं, Dn1 वरूथिनीं (for अनीकिनीम्)

8 [a]) Dc1 Dn1 आज्ञाय (for आदाय) — [b]) K1. 4. 5 D (except D5. 6) -परिस्कृत (for °ष्कृतम्) — [c]) D7 om दध्मौ B3 (marg, orig as in text) घोषेण (for वेगेन) — Ś K1-3 om (hapl.) 8[d]-9[a] — [d]) K4 B1. 5 D1 G1. 2 M घोषेण; B2-4 Dc1 Dn D2-8 फाल्गुन°, T G4 घोरेण (for फल्गुन) D1 दिश (for दिशः) G3 घोरेणापूरयन्दिशं

9 Ś K1-3 om 9[a] (cf v 1 8) — [a]) K5 B2. 3. 5 D (except Dn2 D1. 8) महता, G4 वित्रासं (for वित्रस्ता) — [b]) K4 B1-3 D (except D1) ससप्तक-; K5 समसप्तक- (hypermetric) (for संशप्तक) — [c]) B5 विचेष्टा, D. निचेष्टा Dn1 D4. 8 [अ]चिष्ठिता, D7 G1 M [अ]विष्ठिता (M3 °त), T G2-4 [अ]विस्थिता, G5 [अ]निश्रिता) (for [अ]वस्थिता) G1. 5 M सख्ये Ś1 K1. 2 निश्चेष्टका स्थिता सख्ये — [d]) Ś K (except K2) B Dc1 Dn D1. 2. 6-8 G2 ह्यश्म (for अश्म) M3 तथा (for यथा) D1 ह्यश्मसारमयाप्यथ — After 9, S ins

134* सा सेना भरतश्रेष्ठ निश्चेष्टा शुशुभे तदा ।
चित्रपट्टे यथा न्यस्ता कुशलैः शिल्पिभिर्नरैः ।
स्वनेन तेन सैन्यानां दिवमावृण्वता तदा ।
सस्वना पृथिवी सर्वा तथैव च महोदधिः ।
व्यूढानीकैस्तु तैः सर्वैः पृथिव्यां समरार्णवे । [5]
स्वनेन सर्वसैन्यानां कर्णास्तु बधिरीकृताः ।

[(L 2) G5 चित्रे पटे यदा न्यस्ता (for the prior half) — (L 3) G3 सैन्यानि (for सैन्यानां) M2 आवृण्वते, M3 °ण्वता (for °ण्वता) — G1 M1-4 om line 4 T G2-5 om. line 5 — (L 6) G1 स्वनैस्तु (for स्वनेन) M3-5 भूताना (for -सैन्याना) ]

10 [a]) D8 निवृत्ताक्षा (for विवृ°) — [b]) Ś K (except K3) Dn2 D1. 2. 5 G5 M1. 2 त्रस्तकर्ण, B2 (marg as in text) अस्तकर्ण, Dn1 ध्वस्तकर्ण, G1 सस्त°, M3-5 ततस्तब्ध (for स्तब्धकर्ण) — [c]) Dc1 विश्रब्ध, D2. 5 विध्वस्त (for विष्टब्ध-) Ś1 चरणौ K1 पूर्व (for मूत्र) D4. 7. 8 विशुश्रुवु (D4 विपू*वू) रणे मूत्र — [d]) Ś2 G1 M पुरीष (for रुधिरं) Ś2 विसस्रवु, K1 प्रसस्रवु, K4. 5 Dn2 D5 प्रसुश्रुवु; Dn1 D3. 4. 6-8 प्रशुश्रुवु, D1 प्रसस्रुवु (for प्रसु°) — After 10, S ins

135* ततो व्युपारमच्छब्दः प्रहृष्टास्ते ततोऽभवन् ।

[T G3. 4 ततोप्युपारमत; G5 °प्युपाहरत (for °व्युपारमत). G2 ततोभवत ]

11 [a]) D3 उपालभ्य (for उप°) B1. 4 D1. 4 T G2-5 तत; G1 M तु ते (for च ते) — [b]) S पर्य-

अनागतान्येव शरैश्चिच्छेदाशुपराक्रमः ॥ १२
ततोऽर्जुनं शितैर्बाणैर्दशभिर्दशभिः पुनः ।
प्रत्यविध्यंस्ततः पार्थस्तानविध्यत्रिभिस्त्रिभिः ॥ १३
एकैकस्तु ततः पार्थं राजन्विव्याध पञ्चभिः ।
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमी ॥१४
भूय एव तु संरब्धास्तेऽर्जुनं सहकेशवम् ।
आपूरयञ्शरैस्तीक्ष्णैस्तटाकमिव वृष्टिभिः ॥ १५
ततः शरसहस्राणि प्रापतन्नर्जुनं प्रति ।
भ्रमराणामिव व्राताः फुल्लद्रुमगणे वने ॥ १६
ततः सुबाहुस्त्रिंशद्भिरद्रिसारमयैर्दृढैः ।
अविध्यदिषुभिर्गाढं किरीटे सव्यसाचिनम् ॥ १७
तैः किरीटी किरीटस्थैर्हेमपुङ्खैरजिह्मगैः ।
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ॥ १८
हस्तावापं सुबाहोस्तु भल्लेन युधि पाण्डवः ।
चिच्छेद तं चैव पुनः शरवर्षैरवाकिरत् ॥ १९
ततः सुशर्मा दशभिः सुरथश्च किरीटिनम् ।

वस्थाप्य (for अवस्थाप्य च) — c) D5 पाडुपुत्रस्य (for °पुत्राय) — d) K1 -पत्रिभि° (for पत्रिण)

12 a) D4 7 8 G1 M तानर्जुन, T G2-5 ततोर्जुन° (for तान्यर्जुन) — b) K3 Dc1 D1 पचभिश्च; Dn1 पचैव, M3 4 पच च; M5 पंचापि (for पञ्चैव) S चाशुगान् (for चाशुगे) — c) S अनागतानेव (for °तान्येव) Ś2 शिरश्च, K1 शतैश्च; Dn1 तदा (for शरैश्च) — d) B3 छित्वा च (for चिच्छेद्) Ś K (except K4) Dc1 D1 2 -पराक्रमी, D5 °क्रमै°, Cd पराक्रमः (as in text)

13 a) B5 ते चार्जुन, T G3 4 ततोर्जुन (for ततोऽर्जुनं) K4 D4 7 8 सितैर्बाणैर् K5 D5 शतैर्बाणैर्, T G2-5 शरव्रातैर् (for शितैर्बाणैर्). B3 (marg) Dc1 तेर्जुनं निशितैर्बाणैर् — b) B4 om दशभि — c) K5 D2 तदाविध्यस्, Dn1 प्रत्य°; D1 प्राविध्यत, D5 तदाविध्यन्, T G3 4 प्रत्यविध्यत्, G2 प्रत्यविध्य (for °विध्यस्) K5 D3 तदा (for ततः) — G1 om 13c. — d) D8 M8 आविध्यत् (for अवि°)

14 a) D6 च (for तु) Ś K1-3 तदा (for तत°) M1 2 पार्थं (for पार्थं) — b) S (except G4) पुनर् (for राजन्) — Ś K1-3 om 14c-15b — c) T G2-5 अपि (for प्रति)

15 Ś K1-3 om. 15ab (cf v. l. 14) — a) Dn1 हि, D6 सु (for तु). K4 B1 Dn2 D1 8 M3-5 सक्रुद्धास्, Dc1 सरब्धास् (for °ब्धास्) — b) Dn1 अर्जुन, D1 स्वर्जुन (for तेऽर्जुनं) D4, 7 केशव (for केशवम्). — c) Ś K1 3 Dn2 D8 अपूरयन्, D4 7 8 आधूर° (for आपूर°) Dn2 D8 G1 M तूर्णं (for तीक्ष्णैस्) — d) Ś1 G3, 4 तडाकम्; K1 4 5 B Dn D1 3 5 G2 तडागम्; D4 7 8 मैनाकम्; G1 M2 तटाकैर् (for °कम्)

16 a) T G3 शत (for शर). — b) Ś1 प्रपतन्, D6 प्रपयन्, D7 प्राप्तवन् (for प्रापतन्). B3 4 Dc1 समासान्यर्जुनं प्रति, S प्रपतत्य° — c) K1 घ्रात°; D4 घातात्, Cd व्राता (as in text) — d) D1 T2 G3-5 M4 फुल्ल; M1 2 फुल्लान् Ś K1-3 द्रुमवने; K4 D1 पद्म गणे, B2 3 Dc1 D2 -द्रुमगण, D4 7 °शते, D8 °शतैर्; S °गणान् (for °गणे) K5 वने गणे; D2 -गणे वृते, D8 वनांतरे (for गणे वने) K4 वृते (for वने)

17 a) Ś1 स्व (for सु) T G2-5 तु शरैर्, G1 M दशभिर् (for त्रिंशद्भिर्). — b) Ś1 वज्र, K1 रौद्र (for अद्रि) — c) Dc1 प्राविध्यद् (for अवि°). D4 7 8 पत्रिभिर् (for इषुभिर्) S अविध्यद्दशभिर्बाणै (G1 M °भिश्चान्यै) — d) Ś1 D6 किरीट (for किरीटे). Ś1 D6 S सव्यसाचिन°

18 a) G5 तत (hypermetric) (for तै) Ś वि पक्त°; Ś1 (before corr) K2 3 विमुक्त, K1 वि मुक्ता°, K4 5 Dn2 D1-3 5-8 विपक्तै; Dn1 विव्यक्तैः (for किरीटी) — b) S रुक्म (for हेम) — c) Ś K2 3 D8 शातकौंभ, K1 शांतकौंभ, D5 शांतकुभ; D7 शौतकौंभ (for शातकुम्भ) Dn2 शातकुभामिवा पीडो, Cd शातकुभमयापीते — d) Ś1 K1 3 4 ईश, K8 B1 Dn2 D1 4 सूर्ये, G3 5 धूप (for यूप) Ś K1 3 इवोच्छ्रितै, K4 Dn1 D1 4 इवोत्थित (D2 °तै) (for °च्छ्रित°)

19 a) Dn1 D5 5 6 8 हस्ताघापं. Dn1 D1 5 7 8 च (for तु) — b) Dn1 तु स (for युधि). S स तु भल्लेन पांडव. — c) K4 Dn2 विच्छेद् (for चिच्छेद) — d) K4 5 Dn1 इवाकिरन् (K4 °त्), D4 6 G4 अवा किरन् (for °किरत्)

20 b) Dn1 D2 G1 M3 4 सुरथस्तु, D4 7 सरथश्च (for सुरथश्च) G4 किरीटिन (for °टिनम्) — c) Ś K1-3 D5 सुशर्मा; K4 5 D1 सुवर्मा, Dn2 D2 4.

सुधर्मा सुधनुश्चैव सुबाहुश्च समर्पयन् ॥ २०
तांस्तु सर्वान्पृथग्बाणैर्वानरप्रवरध्वजः ।
प्रत्यविध्यद्ध्वजांश्चैषां भल्लैश्चिच्छेद काञ्चनान् ॥ २१
सुधन्वनो धनुश्छित्त्वा हयान्वै न्यवधीच्छरैः ।
अथास्य सशिरस्त्राणं शिरः कायादपाहरत् ॥ २२
तस्मिंस्तु पतिते वीरे त्रस्तास्तस्य पदानुगाः ।
व्यद्रवन्त भयाद्भीता येन दौर्योधनं बलम् ॥ २३
ततो जघान संक्रुद्धो वासविस्ता महाचमूम् ।
शरजालैरविच्छिन्नैस्तमः सूर्य इवांशुभिः ॥ २४
ततो भग्ने बले तस्मिन्विप्रयाते समन्ततः ।
सव्यसाचिनि संक्रुद्धे त्रैगर्तान्भयमाविशत् ॥ २५
ते वध्यमानाः पार्थेन शरैः संनतपर्वभिः ।
अमुह्यंस्तत्र तत्रैव त्रस्ता मृगगणा इव ॥ २६
ततस्त्रिगर्तराट् क्रुद्धस्तानुवाच महारथान् ।
अलं द्रुतेन वः शूरा न भयं कर्तुमर्हथ ॥ २७
शप्त्वा तु शपथान्घोरान्सर्वसैन्यस्य पश्यतः । C 7 749 B 7 18 23 K 7 18 31

---

e–8 S (except M7 8) सुधन्वा (for सुधर्मा) D5 सुधनश्चैव, T G M1 2 च सुबाहुश्च, M4 सुबाहुश्चैव (for सुधनुश्चैव) — d) G1 M1 2 5 सुबाणश्च (for सुबाहुश्च) Ś1 K1 2 समा(K2 °म)र्दयन्, Ś2 K4 Dc1 D2. 5 समर्प(Ś2 K4 °र्द)यत्, K3 B Dn2 D1 2 M3 4 समार्पयन् (B2–4 °यन्), Dn1 समर्दयत्, D1 7 8 समाहित, D5 समर्ययन् (for °र्पयन्)

21 a) K5 B3 T G1 3 4 M4 5 च, D. तान् (for तु) D5 पृथक्चापौ (for पृथग्बाणैर्) — b) K1 Dn1 D2 6 वारयन् (for वानर) D2 6 प्लवगध्वज — c) K1 प्रत्यविध्यद्, D5 6 G3 °विध्य (for °विध्यद्) G3 ध्वज T G2 5 तेषां (for चैषां) — d) K1 कांचनात्; Dc1 सायकान्, Dc1 (before corr) कार्मुकान्; S वीर्यवान् (for काञ्चनान्)

22 D3 om 22 — a) K1 सुधन्विनो G5 ततश्छित्त्वा (for धनुश्छित्त्वा) — b) K3 न्यवधत, D1 7 8 व्यधमत, D5 विधमत् (for न्यवधीत्) K6 हयाश्च न्यवधच्छरैः, B Dc1 हयांश्चास्यावधीच्छरैः, Dn1 हयांश्चैवावधीच्छरैः, Dn2 D6 हयांस्तानवधीच्छरैः, S हयांश्च जनान्वा(G3 5 °च्छ)रैः — c) K4 अथास्य शिरस्त्राण — d) D2 4 6 7 अपातयत् (for °हरत्) — After 22, S ins.

136* जहार पार्थः सैन्येषु सहस्रे द्वे च योधिनाम् ।

[ G1 M जघान (for जहार) G6 पर (for पार्थ) G5 देहिनां (for योधिनाम्) ]

23 a) B1 4 5 Dn2 D2 S नि (for तु) — b) Dn1 ध्वस्तास् (for त्रस्तास्) K6 तत्र, D2 तस्थु, T G2–4 सर्वे (for तस्य) — After 23ab, S Cv ins.

137* भूयिष्ठं प्रतिरुद्धास्ते हतयोधैर्यशस्विन ।

[ Cv ये (for ते), G6 हतयोधो (slo), Cv हतैर्योधा (for हतैर्योधैर्) G1 M1–4 महस्त्रश (for यशस्विन) M5 हयैर्यो*म*स्त्रश (for the post half) ]

— c) K4 Dn2 D2 3 5 प्राद्रवत, Dn1 प्रद्रवत (for व्यद्रवन्त) B3 5 Dc1 रणाद् (for भयाद्) K1 भीताद् (for भीता) S विदुद्रुवुस्तदा योधा (G1 M भीता, G3 योधा) — d) K3 B1 5 Dc1 (by corr) T G1 3 4 M3–5 यत्र, G5 तेन (for येन)

24 a) Dc1 जवेन (for जघान) Ś2 सरब्धो, Dn1 कौंतेय (for संक्रुद्धो) — b) Dn1 सक्रुद्धस् (for वासविस्) — c) K5 अवच्छन्नैस्, D4 अवच्छिन्नैस् (for अवि°)

25 a) S बाणैर् (for भग्ने) — b) B Dc1 D1 G1 M विप्रलीने, T G2–5 प्रविलीने (for विप्रयाते) — d) G3 त्रिगर्तान् (for त्रैग°) S मृत्युर् (for भयम्)

26 a) D7 om ते S हन्यमाना (for वध्य°) — c) B1 3 5 Dc1 व्यभ्रमस्, Dn2 D3 6 व्यमुह्यस्, D4 मुमुहुस्, D5 आमुह्यंस् (for अमुह्यस्) S मुहुर्मुहुस्तत्रस्ता (G5 °स्तत्र तत्रा) — d) T G4 M सिंहान्, G1–2 5 सिंह (for त्रस्ता) Dn2 D7 4 6 3 योषिन्म (Dn2 न्म)दवशा(Dn2 D2 °सा)दिव, D7 योषिन्मदवशादिव

27 a) Dn1 D2 4 5 7 8 ततस्त्रिगर्तं संक्रुद्धस्; D6 त्रिगर्तराज सक्रुद्धस् — c) K6 द्रवेन, D2 5 द्रवेण, T दूतेन; Cd द्रुतेन (as in text) D6 शूरा वो (by transp) Cv as in text — d) G5 मा (for न)

28 a) K6 B2–5 Dc1 Dn2 D1–5 7 8 G3 श्राव्याय, B1 कृत्वा च, Dn1 T G1 3–5 M शप्त्वा च; D5 उक्त्वा तु, D6 इष्ट्वाथ (for शप्त्वा तु) — c) Ś1 K1 नत्वा, K3 नुत्वा, D3 मत्वा (for गत्वा) Ś K1–3 Dn2 D4 7, 8 दुर्योधन (for दौर्यो°) Ś1 सव्ये, K1–3 सैन्ये (for सैन्य). — d) B3 नु; Dn1 D3 6 चा (for चै),

30 31 गत्वा दौर्योधनं सैन्यं किं वै वक्ष्यथ मुख्यगाः ॥ २८
नावहास्याः कथं लोके कर्मणानेन संयुगे ।
भवेम सहिताः सर्वे निवर्तध्वं यथाबलम् ॥ २९
एवमुक्तास्तु ते राजन्नुदक्रोशन्मुहुर्मुहुः ।
शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परम् ॥ ३०
ततस्ते संन्यवर्तन्त संशप्तकगणाः पुनः ।
नारायणाश्च गोपालाः कृत्वा मृत्युं निवर्तनम् ॥ ३१

इति श्रीमहाभारते द्रोणपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## १८

संजय उवाच ।
दृष्ट्वा तु संनिवृत्तांस्तान्संशप्तकगणान्पुनः ।
वासुदेवं महात्मानमर्जुनः समभाषत ॥ १
चोदयाश्वान्हृषीकेश संशप्तकगणान्प्रति ।
नैते हास्यन्ति संग्रामं जीवन्त इति मे मतिः ॥ २
पश्य मेऽस्त्रबलं घोरं बाह्वोरिष्वसनस्य च ।
अद्यैतान्पातयिष्यामि क्रुद्धो रुद्रः पशूनिव ॥ ३
ततः कृष्णः स्मितं कृत्वा परिणन्द्य शिवेन तम् ।

---

Ś $K_{1-4}$ $D_1$ नित्यश ; $K_5$ B $D_{01}$ Dn $D_{3-8}$ मुख्यश. (for मुख्यगाः)

29 $^a$) S (except $M_{2,4}$) नापहास्या (for नाव°) —$^b$) $K_5$ तेन (for [अ]नेन). —$^c$) $Dn_1$ जयेन (for भवेम) $K_8$ भये समाहिता सर्वे. —$^d$) $Ś_1$ निवर्तेत, $Ś_2$ $K_1$ $D_5$ °र्तेत ; $K_{3,4,5}$ $D_2$ °र्तत ; $D_4$ °र्तामो, $D_{7,8}$ °र्तामो (for °र्तध्व) $K_1$ महाबल, $D_6$ $M_{4,5}$ महाबला , T $G_2$ $M_{1-3}$ महारथा (for यथाबलम्).

30 $^a$) $K_5$ $D_{5,6}$ S ततो (for तु ते) —$^b$) T $G_{3,4}$ विक्रोशंतो ; $G_{1,5}$ M उत्क्रोशतो ($G_5$ °ते) (for उदक्रोशन्) $G_2$ उत्क्रोशतस्ततस्तत —$^c$) $D_{01}$ $D_{5,8}$ दधिरे (for दध्मिरे) S शंखान्प्रदध्मुस्ते वीरा —$^d$) Ś $K_{1-3}$ पुनः पुनः (for परस्परम्).

31 $^b$) $K_4$ $B_{1,2}$ D संसप्तक (for संशप्तक) —After $31^{ab}$, $G_4$ reads 7 18 $1^{cd}$ —$^c$) $K_3$ $D_1$ नारायणाच् (for °यणाश्) $C_v$ d cite नारायणाश् (as in text) $K_3$ B $D_{01}$ $Dn_2$ $D_{2,3,5,6}$ $G_5$ गोपाला. $G_2$ नादयाना दिश सर्वा ; $C_v$ as in text —$^d$) $Ś_2$ $K_5$ $D_1$ $G_2$ कृत्वा मृत्यु , B $D_{01}$ $Dn_2$ $D_{2,6}$ $C_v$ मृत्यु कृत्वा (by transp ) $K_1$ निवर्तिनं, $C_v$ निवर्तनम् (as in text )

Colophon —*Sub-parvan* $K_5$ संशप्तकवध —*Day of Drona's Generalship* $Ś_2$ $K_{1,2}$ द्वितीयदिवसे, $K_3$ $D_1$ द्वितीययुद्धदिवसे. —*Adhy name* $K_5$ सुधन्ववध , $B_{1,2}$ $D_{01}$ $D_{5,6}$ संसप्तकप्रतिज्ञा, $Dn_1$ संसप्तकभगे नीवर्तनसंसप्तकभगे निवर्तन ; $D_3$ संसप्तकयुद्ध , $G_1$ $M_{1,2}$ संशप्तकयुद्ध —*Adhy no* (figures, words or both) $K_{3,8}$ $B_{1,2}$ $Dn_1$ $D_{7,8}$ S (except $G_2$) 17 (as in text), $D_3$ 18 —*Śloka no* $D_{01}$ $Dn_1$ 31.

## 18

1 $^a$) T $G_{2-5}$ च (for तु). $D_6$ विनिवृत्तांस् (for संनिवृ°). $K_5$ $Dn_1$ $D_5$ संनिवृत्तास्तु तान्दृष्ट्वा —$^b$) $K_4$ D (except $D_1$) संसप्तक (for संशप्तक). T $G_3$ पुर (for पुन) —$G_4$ reads $1^{cd}$ after 7 17. $31^{ab}$ —$^d$) $B_{3,4}$ S प्रत्यभाषत (for सम°).

2 $^a$) $K_5$ $D_{01}$ $D_{4-8}$ नोदयाश्वान् (for चोदया°). —$^b$) $K_{1,4}$ D (except $D_{2,6}$) संसप्तक (for संश°) —$^c$) $Dn_1$ $D_{4,7,8}$ नैते यास्यति संग्रामाज्

3 $^a$) $K_5$ $D_{2,5}$ मे सुबल, $B_3$ शस्त्रबलं, $D_{01}$ मेद्य बल ; S चास्त्र($G_3$ °स्त्र)बल (for मेऽस्त्रबलं) S मह्य (for घोर) —$^b$) $Dn_2$ $D_3$ $G_{1,2}$ बाह्वोरिष्वासनस्य च ; $D_6$ T $G_{3,4}$ बाह्वोरिष्व° —$^c$) $D_6$ अद्यैनान् (for अद्यै तान्) $K_5$ वारयिष्यामि ; $Dn_2$ $D_3$ निहनि° ; $D_{7,8}$ घातयि° (for पातयि°) $Dn_1$ अथ हस्ये गणानेतान्, $D_4$ अद्यैव तान्घातयिष्यामि (hypermetric), T G $M_{1,2}$ अद्य द्रोको ($G_3$ °तो) गणानेतान्, $M_{3-5}$ अद्य द्रोको रणे हन्यां —$^d$) T $G_{1-3,5}$ $M_{1,2}$ हन्यां ; $G_4$ हन्याद् ; $M_{3-5}$ एतान् (for क्रुद्धो).

प्रावेशयत दुर्धर्षो यत्र यत्रैच्छदर्जुनः ॥ ४
वभ्राजे स रथोऽत्यर्थमुह्यमानो रणे तदा ।
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः ॥ ५
मण्डलानि ततश्चक्रे गतप्रत्यागतानि च ।
यथा शक्ररथो राजन्युद्धे देवासुरे पुरा ॥ ६
अथ नारायणाः क्रुद्धा विविधायुधपाणयः ।
छादयन्तः शरव्रातैः परिवव्रुर्धनंजयम् ॥ ७
अदृश्यं च मुहूर्तेन चक्रुस्ते भरतर्षभ ।
कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनंजयम् ॥ ८
क्रुद्धस्तु फल्गुनः संख्ये द्विगुणीकृतविक्रमः ।
गाण्डीवमुपसंमृज्य तूर्णं जग्राह संयुगे ॥ ९
बद्ध्वा च भ्रुकुटीं वक्त्रे क्रोधस्य प्रतिलक्षणम् ।
देवदत्तं महाशङ्खं पूरयामास पाण्डवः ॥ १०
अथास्त्रमरिसंघघ्नं त्वाष्ट्रमभ्यस्यदर्जुनः ।
ततो रूपसहस्राणि प्रादुरासन्पृथक्पृथक् ॥ ११
आत्मनः प्रतिरूपैस्तैर्नानारूपैर्विमोहिताः ।
अन्योन्यमर्जुनं मत्वा स्वमात्मानं च जघ्निरे ॥ १२
अयमर्जुनोऽयं गोविन्द इमौ यादवपाण्डवौ । C 7 765 B 7 19 13 K 7 19 13

4 [a]) B1 क्रुद्ध (for कृष्ण) Dn1 च त (for स्मित) D4 7 दृष्ट्वा (for कृत्वा) — [b]) K3 5 B1 D7 8 प्रतिनद्य, K1 परिनिद्य, B1 D7 8 परिनद्य, B3 Dc1 Dn2 D5 अभिनद्य, B2 5 अतिनद्य D1 परिवद्य (for परिणन्द्य) — For 4[ab], S subst

138* एवं मुवाच बीभत्सु केशव शत्रुवाहिनीम् ।

— [c]) Ś K1 4 दुर्धर्षं (for दुर्धर्षो) — [d]) D1 यत्रैव (for यत्रैच्छद्)

5 [a]) B3-5 Dn1 D7 8 वभ्राज, D2 भ्राजते, D6 विभ्राज (for वभ्राजे) D1 om स रथो K4 रथेत्यर्थम्, B1 Dn1 रथोत्यतम् D6 रथो राजन् (for रथोऽत्यर्थम्) Dc1 S स रथो भ्राजतेत्यर्थम् — [b]) Ś1 Dn1 D8 मुह्यमानो; Ś1 मुह्यमाने, D4 7 उह्यमाने, S (except M1 2 3) ऊह्यमानो (for उह्य°) T G2-5 महाहये, G1 M हयोत्तमै (for रणे तदा) — [c]) T G1-4 M8 ऊह्यमानम् — [d]) D5 पाडुर हयै, S पाडु(G1 2-5 M3 4 °ड)रैर्वने (for पाण्डुरैर्हयैः)

6 [c]) Dc1 D6 तथा (for यथा) K1 चक्ररथो (for शक्र°) — [d]) D4 7 8 कृद्धो (for युद्धे) Ś1 तदा (for पुरा)

7 [a]) D6 विद्धा (for क्रुद्धा) — [c]) In Ś1, the portion from शरव्रातै up to भार (in 7 19 5[b]) is lost on a missing folio

8 Ś1 missing (cf v 1 7) D8 om (hapl) 8. — [a]) B1 Dn1 D6 T G5 अदृश्य तं, G3 4 अदृश्यंत (for अदृश्य च) — [b]) D4 7 8 सं (for ते) Dc1 Dn1 भरतर्षभं

9 Ś1 missing (cf v 1 7) — [a]) Ś1 K (except K5) सक्रुद्ध, D1 अयुध्यत, D3 क्रुद्धश्च (for क्रुद्धस्तु) K2-5 B D G2 फल्गुन G1 4 5 M3-5 संख्ये, M1 2 मघे (for सख्ये) — [c]) K1, 2 D8 उपसमृज्य (D8 °स्य), K3 B Dc1 धनुरामृज्य, Dn2 D8 धनुराकृष्य, S अनुसमृज्य (for उप ) — [d]) D5 तूण (for तूर्णं) Dn2 D8 सकुले (for सयुगे) S तूणी (G1 °र्णि, G5 °र्णी, M1 2 °र्णी) सस्पृश्य चाहवे

10 Ś1 missing (cf v 1 7) Ś1 K3 8 om 10[ab] — [a]) K4 D1 वभ्राम, K5 D5 ययाय; D6 बद्धा च, T G2 8 स बद्धा, G4 स कृत्वा; G6 सबद्धा (for बद्धा च) B1 D1 2 3 5 7 8 G5 भृकुटिं, B5 Dn2 भृकुटी (for भ्रुकुटीं) K1 Dn1 D4 7 चक्रे B5 युक्त (for वक्त्रे) Dc1 तथा च भ्रकुटी चक्र

11 Ś1 missing (cf v 1 7) — [a]) S (except G5) ततोऽस्त्रम् (for अथास्त्रम्) — [b]) Ś1 K1 2 5 D4 7 G1 M1 2 अभ्यमद् (for °स्यद्) — [c]) K1-3 भूप (for रूप-)

12 Ś1 missing (cf. v 1 7) — [a]) T G2 3 5 अर्जुन, G1 4 M अर्जुन (for आत्मन) K5 D2 5 प्रतिरूपैस्तु, Dn1 °रूपश्च, D4 7 8 °रूपस्थैर् (for °रूपै-स्तैर्) — [b]) D6 नानारूप- (for °रूपैर्) — [c]) B (except B1) D1 अन्योन्येनार्जुन — [d]) Ś1 K1-3 नि जघ्निरे, K4 विजघ्निरे (for च जघ्निरे) K6 Dn1 D2-8 स्वकीयाने(D5 नि)व जघ्नि(D- घ्नो)रे, S परस्परमथा घ्नत (G8 °ता, G5 M3 4 °त)

13 Ś1 missing (cf v 1 7) D6 om 13 — [a]) Hypermetric Dn1 अर्जुन (for अर्जुनोऽय) Dn2 D8 अर्जुनोयमय कृष्ण — [b]) K8 Dn2 D3 M1 2 इमौ पांडवयादवौ; D2 स्वय केशवपांडवौ, D4 7 8 इमौ

13 इति ब्रुवाणाः संमूढा जघ्नुरन्योन्यमाहवे ॥ १३
मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परम् ।
अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः ॥ १४
ततः शरसहस्राणि तैर्विमुक्तानि भस्मसात् ।
कृत्वा तदस्त्रं तान्वीराननयद्यमसादनम् ॥ १५
अथ प्रहस्य बीभत्सुर्ललित्थान्मालवानपि ।
माचेल्लकांस्त्रिगर्तांश्च यौधेयांश्चार्दयच्छरैः ॥ १६
ते वध्यमाना वीरेण क्षत्रियाः कालचोदिताः ।
व्यसृजञ्शरवर्षाणि पार्थे नानाविधानि च ॥ १७
ततो नैवार्जुनस्तत्र न रथो न च केशवः ।
प्रत्यदृश्यत घोरेण शरवर्षेण संवृतः ॥ १८
ततस्ते लब्धलक्ष्यत्वादन्योन्यमभिचुक्रुशुः ।

---

माधवपांडवौ — c) Ś1 K3 8 सपूर्णा; K4 D1 स्वात्मान, D4 ते मूढा (for समूढा) — d) M3 4 जघ्नन् (for जघ्नुर्) S अजसा (for आहवे) — After 13, S ins

139* अन्योन्य समरे जघ्नुस्तावका भरतर्षभ ।

[ G2 अन्योन्यमनमा (for अन्योन्य समर) ]

14 Ś2 missing (of v 1 7) — b) S पांडवेन महात्मना — After $14^{ab}$, S ins

140* रुधिरोक्षितगात्रास्ते प्रेक्षमाणा परस्परम् ।

[ M5 तु (for ते). ]

— c) Dn1 D4 7 8 मूढा ; G1 M योधा (for योधा). — d) K3 किंशुका पुष्पिता इव; Dn1 किंशुका इव पुष्पिता — After 14, S ins

141* रुधिरोत्पीडमास्ते तु रुधिरेण समुक्षिता ।
चन्दनस्य रसेनेव व्यभ्राजन्त रणाजिरे ।
तत प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिव भृशम् ।
न्यहनत्ताञ्शरैस्तीक्ष्णैस्तम सूर्य इवांशुभि ।
हतावशिष्टास्ते भूय परिवार्य धनजयम् । [5]
साश्वध्वजरथ चक्रुरदृश्य शरवृष्टिभि ।

[ (L 1) G5 रुधिरोत्पीटमानास्ते, M4 5 °त्पीटिनस्ते तु (for the prior half) — (L 2) S (except G1 M1 2 5) रसैनेव G1 M महारथा (for रणाजिरे) — (L 3) G3. 4 प्रमथ (for प्रहस्य) — After the prior half of line 3, G1 M1 2 5 read $16^{bc}$, for the first time, repeating it in its proper place, while M3 4 read $16^{bc}$ after the prior half of line 3. G1 3 4 M व्याक्षिपन् (for °क्षिपद्). G3 4 धनु (for भृशम्) — (L 4) G5 न्यहनस् (for न्यहनत्) G1 M दीप्तैस् (for तीक्ष्णैस्) — (L 6) G5 साथ (for साश्व) ]

15 Ś2 missing (of v 1 7) — b) D8 om तै K4 B1 Dn2 D8 तैर्मुक्तानि च, S (except G2) विप्रमुक्तानि (for तैर्विमुक्तानि) — c) T G M1 2 ततस्तु; M3-5 विशस्त्रान् (for तदस्त्र). — d) K1-3 साधन (for सादनम्).

16 Ś2 missing (of v 1 7) — a) S (except G5) तत (for अथ) K1 प्रशस्य, Dn2 D3 6 क्रुद्धस्तु (for प्रहस्य). — G1 M1 2 5 read $16^{bc}$ for the first time after the prior half of line 3 of 141*, while M3 4 read $16^{bc}$ after the prior half of the same line — b) K3 8 B2-4 कलिंगान्, Dn2 लिलित्थान्; T G1 (both times) 3-5 M1 2 (last two both times) 3 4 5 (both times) लिलिं(G3 °ळिं)धान्; G2 सिलिंधान् (for ललित्थान्) Ś1 K2 D6 मानवानपि; B2-4 Do1 मालवाञ्शकान्; G1 (both times) 3 4 M1 2 (last two both times) 3 4 5 (both times) माळवानपि (for मालवानपि). — c) Ś1 साचेल्लकांस्, K1-3 सचेल(K1 2 °ल्ल)कांस्; B (except B2) Do1 Dn1 D2 5 मावेल्लकास्, Dn2 मालवांश्च, D1 4 7 8 मांचेल्लिकां(D1 °का)स्, D6 मेकलांश्च; T G2 4 5 मचिल्ल(G4 °ल्लि)कांस्; G1 M1 2 (all both times) 3 4 5 (both times) मच्छिल्लिकास्, G3 मचिल्लगास् (for माचेल्लकास्) — d) K3 4 Do1 T G2 3 M1 2 योधेयाश्च्, D4 योधयश्च्, D7 योधयेश्च् (for यौधेयांश्च्) K1 B2 D1 G3 चार्दयन् (for चार्दयत्) Dn1 D6 योधानाच्छादयच्छरै, Dn2 योधेयांस्थादयञ्छरै; D2 3 5 यो(D3 यौ)धेयाञ्छादया(D2 °य)ञ्छरै; G4 योधेयाश्चा**ञ्छरै

17 Ś2 missing (of v 1 7) G5 reads 17 twice — a) B (except B1) Do1 D1 S (G5 both times) हन्यमाना (for वध्य°). — b) B1 कालमोहिता; Dn1 D2 4-8 °नोदिता (for °चोदिता) — c) M3 5 असृजन् (for व्यसृजन्) B4 5 G5 (both times) -जालानि (for वर्षाणि) — d) Ś1 Dn2 D8 हृ, K4 D1 वै (for च). D2 पार्थे नानाविधे नृणां

18 Ś2 missing (of v 1 7) — a) S न च (for नैव) K1 तात (for तत्र). — b) B1 नैव, T G2-5 नापि (for न च) — c) B (except B4) Do1 D3 S प्रत्यदृश्यंत (for °दृश्यत). — d) B D3 S संवृता (for संवृत)

19 Ś2 missing (of. v 1. 7) — a) K3 4. 5 B D

हतौ कृष्णाविति प्रीता वासांस्यादुधुवुस्तदा ॥ १९
भेरीमृदङ्गशङ्खांश्च दध्मुर्वीराः सहस्रशः ।
सिंहनादरवांश्चोग्रांश्चक्रिरे तत्र मारिष ॥ २०
ततः प्रसिष्विदे कृष्णः खिन्नश्चार्जुनमब्रवीत् ।
क्वासि पार्थ न पश्ये त्वां कच्चिज्जीवसि शत्रुहन् ॥ २१
तस्य तं मानुषं भावं भावज्ञोऽऽज्ञाय पाण्डवः ।
वायव्यास्त्रेण तैरस्ता शरवृष्टिमपाहरत् ॥ २२
ततः संशप्तकव्रातान्साश्वद्विपरथायुधान् ।
उवाह भगवान्वायुः शुष्कपर्णचयानिव ॥ २३
उह्यमानास्तु ते राजन्बह्वशोभन्त वायुना ।
प्रडीनाः पक्षिणः काले वृक्षेभ्य इव मारिष ॥ २४
तांस्तथा व्याकुलीकृत्य त्वरमाणो धनंजयः ।
जघान निशितैर्बाणैः सहस्राणि शतानि च ॥ २५
शिरांसि भल्लैरहरद्बाहूनपि च सायुधान् ।
हस्तिहस्तोपमांश्चोरूञ्शरैरुर्व्यामपातयत् ॥ २६
पृष्ठच्छिन्नान्विचरणान्विमस्तिष्केक्षणाङ्गुलीन् ।

S -लक्षत्वाद् (for लक्ष्यत्वाद्) — b) K₃ इति, D₁ ₂ ₇ ₈ अति, M₁ अपि (for अभि) — Dn₂ reads 19cd twice — c) D₈ इमौ (for इति) Ś₁ K (except K₈) B₁ Dn₁ (both times) n₂ D₁₋₅ ₇ ₈ प्रीत्या; B₁ तदा (for प्रीता) — d) Ś₁ K₃ वासांश्च Ś₁ [आ]दुद्रुवुस्, K₃ D₂ [आ]दुदुहुस्. Ś₁ D₁ ₃ सह, K₅ B₁ Dc₁ Dn₁ (first time) n₂ D₃ ₄ ₆ च ह (for तदा) K₁ ₂ D₆ वासांस्या(K₁ °साश्च, K₂ °सास्या)- दुद्रुवु मह, K₄ D₅ वासांश्चाधुधुवु सह (D₅ °धुश्च ह); Dn₁ (second time) ननृतुस्ते मुद युयु; S शङ्खान्द ध्मुश्च वे तदा

20 Ś₁ missing (cf. v. l. 7) — a) Dn₂ S -शङ्- खांश्च (T₁ °ख्व्) (for शङ्खांश्च) K₁ ₄ D₁ भेरीमृ(K₁ °न्मृ)दङ्गान्शङ्खांश्च, K₃ भेरीन्मृदङ्गांश्च शङ्खान्, D₅ ₇ ₈ भेरीशङ्खमृदङ्गांश्च — b) S चक्रुर्वीरा प्रहृष्टवत् — c) K₆ Dn₂ D₃ ₅ ₆ ₈ [प]्रोच (for [उ]ग्रांश्च) — d) S प्रचक्रुम् (for चक्रिरे) Dn₂ चोग्रांस्तत्र हि मारिष

21 Ś₁ missing (cf. v. l. 7) — a) Ś₁ K₁₋₃ B (except B₁) Dc₁ Dn D₁ ₂ T G₁ ₃ M₁ ₂ प्रसिस्विदे, K₄ D₃₋₅ ₇ ₈ G₂ ₄ M₃₋₅ प्रमम्विदे, K₅ प्रशशिंदे, D₆ प्रपिपिदे, G₅ प्रशस्यते (for प्रसिष्विदे) Cd cites सिष्विदे — b) Dn₂ प्रस्विन्नो, D₃ ₆ स खिन्नो (for खिन्नश्च) — c) K₁ पश्येत्वां, B₁ ₃ ₄ पश्येय, S पश्यामि (for पश्ये त्वां) — d) K₁ कश्चिज्, D₆ कच्चिज् (for कच्चिज्) D₁ ₇ ₈ भारत (for शत्रुहन्)

22 Ś₁ missing (cf. v. l. 7) — a) Dn₁ D₁ ₇ ₈ T G₁ ₃ M तन् (for त) K₁ B₁ तस्य तच्चापितं श्रुत्वा, B₂ ₃ ₆ Dc₁ तस्य तद्वचनं श्रुत्वा; G₄ तस्य तन्मानसगत — b) G₂ जीवज्ञो (for भावज्ञो) Ś₁ K₂₋₆ B₁ Dn D₁₋₈ आज्ञाय स (B₁ अवज्ञाय, Dn₁ त्वाज्ञायाथ, D₃ आश्रित्य स, D₄ ₇ ₈ समाज्ञाय) धनंजय; K₁ B₂₋₅ Dc₁ त्वरमाणो धनंजयः; G₃ भावयज्ञाय पांडव. — c) D₁ तरसा (for तैरस्ता) Cd cites अस्ता (as in text) G₄ वायव्यास्त्रे तानस्त्रान् (submetric) — d) T₂ G₂ ₅ शास्त्र (for शर) K₃ D₅ उपाहरत्, Dn₂ D₅ उवाह ता; G₁ M अपानुदत् (for °हरत्)

23 Ś₁ missing (cf. v. l. 7) — a) K₁ B₁ Dc₁ Dn₂ D₂ ₃ ₅ ₆ ₈ संसप्तक, Dn₁ समप्तक, D₄ ₇ त सप्तक (for संशप्तक-). K₄ D₁ गणान् (for व्रातान्) S संशप्तकगणव्रातान् — b) K₄ G₁ M साश्वध्वज; B₂₋₅ Dn₁ D₁ ₃ ₄ ₅ G₃ ₄ °द्वीप- (for °द्विप) G₂ ₅ रथा युधान् G₄ नरायुधान् (for -रथायुधान्) — d) Dn₂ D₂ वनानिव; D₄ ₇ G₃ -चयानि च; G₂ चयानिह (for -चयानिव).

24 Ś₁ missing (cf. v. l. 7) — a) K₄ उह्यमानास्. T G₂₋₅ गृह्यमाणास्, M₂₋₅ ऊह्यमानास् (for उह्य°) Dn₂ D₃ ₆ ततो (for तु ते) — b) Dc₁ Dn₁ D₆ बहु शोभत — c) K₁ उडीना, K₄ प्रोड्डीना, K₅ Dn₁ D₂ ₃ ₅ उड्डीना, B₂ ₄ Dc₁ D₄ ₆₋₈ S प्रलीना, D₁ प्रोड्डीना, Cv प्रडीनां, Ca d प्रडीना (as in text)

25 Ś₁ missing (cf. v. l. 7) — a) K₅ D₅ तदा, Dn₂ D₂ ₄ ततो, G₅ lacuna (for तथा)

26 Ś₁ missing (cf. v. l. 7) — a) Dc₁ Dn₂ D₂ G₂ ₄ अहरद् G₃ असरद् (for अह°) — c) D₂ ₅ ₇ ₈ G₁ M चोरून्, D₆ चैव (for चोरून्) — d) B₂ Dn₂ D₅ ₆ ₇ ₈ G₁ M क्षुरैर्, B₁ बाणैर् (for शरैर्) Dn₁ न्यपा- तयत् (for अपा°)

27 Ś₁ missing (cf. v. l. 7) — a) K₄ छिन्न पृष्ठान् (for पृष्ठच्छिन्नान्) D₃ बाहृष्टच्छिन्नचरणान् — b) K₂ ₃ ₅ Dn₂ विमस्ति(K₄ ₆ °स्त)केक्षणांगुलीन्; B₁, ₂ ₅ Dc₁ Dn₁ D₆ बाहुपृष्ठे(Dn₁ °पार्श्वे)क्षणाकुलान्; T G₃, ₄

27 31 नानाङ्गावयवैर्हीनांश्चकारारीन्धनंजयः ॥ २७
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
शरैर्विशकलीकुर्वंश्चक्रे व्यश्वरथद्विपान् ॥ २८
मुण्डतालवनानीव तत्र तत्र चकाशिरे ।
छिन्नध्वजरथव्राताः केचित्केचित्क्वचित्क्वचित् ॥ २९
सोत्तरायुधिनो नागाः सपताकाङ्कुशायुधाः ।
पेतुः शक्राशनिहता द्रुमवन्त इवाचलाः ॥ ३०
चामरापीडकवचाः स्रस्तान्त्रनयनासवः ।
सारोहास्तुरगाः पेतुः पार्थबाणहताः क्षितौ ॥ ३१
विप्रविद्धासिनखराश्छिन्नवर्मर्ष्टिशक्तयः ।
पत्तयश्छिन्नवर्माणः कृपणं शेरते हताः ॥ ३२
तैर्हतैर्हन्यमानैश्च पतद्भिः पतितैरपि ।
भ्रमद्भिर्निष्टनद्भिश्च घोरमायोधनं बभौ ॥ ३३
रजश्च महदुद्भूतं शान्तं रुधिरवृष्टिभिः ।
मही चाप्यभवद्दुर्गा कबन्धशतसंकुला ॥ ३४
तद्बभौ रौद्रबीभत्सं बीभत्सोर्यानमाहवे ।
आक्रीड इव रुद्रस्य घ्नतः कालात्यये पशून् ॥ ३५
ते वध्यमानाः पार्थेन व्याकुलाश्वरथद्विपाः ।

विमस्तांत्रेक्षणागुली( $G_8$ °ळी )न्. $G_5$ विमस्तश्रेणांगुळीन् (sic) — $^c$) $D_6$ वरांगावयवैर्हीनाश्च — $^d$) $D_5$ [आ शु (for [अ]रीन्).

28 $Ś_2$ missing (cf v l 7) — $^b$) $Dn_1$ विवि धान् (for विधिवत्). $D_8$ कृतितान्, $D_7$ ललितान् (for कल्पितान्) $K_5$ रवान्, $M_{3-5}$ नवान् (for रथान्) —$^d$) $G_5$ चाश्व (for व्यश्व) S (except $G_{4.5}$) ध्वजान् (for द्विपान्). $D_{4, 7, 8}$ चक्रे व्य( $D_8$ °क्रैर्व्यं )श्वांस्ततस्तत.

29 $Ś_2$ missing (cf v. l 7) — $^a$) $D_4$ मुद्धं; $D_8$ तुढ- (for मुण्ड-) — $^b$) $G_5$ om. the second तत्र Some MSS चकासिरे — $^c$) $D_5$ -रथध्वज- (for -ध्वजरथ-) $B_4$ $D_2$ $G_4$ छिन्ना रथध्वजव्राता. — $^d$) $Ś_1$ $K_{1.2}$ तत्र केचित्, $K_3$ B D (except $D_{4, 7, 8}$) केचित्तत्र, T $G_{2-5}$ केचिद्योधा (for केचित्केचित्) $G_4$ पृथक्पृथक् (for क्वचित्क्वचित्)

30 $Ś_2$ missing (cf v l 7) — $^a$) B $Dc_1$ सातरा युधिनो, $D_1$ सोनरायु°; Ca सोत्तरासाधन, Cd °युधिन (for °युधिनो) $G_2$ दता (for नागा) $Dn_1$ सोत्तरीयवतो नागा, $D_6$ सांतरा रथिनो नागा — $^b$) $B_4$ $Dn_2$ $D_2$ T $G_{2-5}$ सपताकांकुशध्वजा, $D_{4, 7, 8}$ सपत्रा° ( $D_8$ °त्रा ) सांकुशायुधा° — $^c$) $Dn_2$ $D_8$ शक्राशनि-हता पेतुर् — $D_8$ om (hapl) $30^d$–$31^e$ — $^d$) $D_6$ यद्वद्द्रुमवत (hypermetric) (for द्रुमवन्त) $G_2$ सद्रुमा इव पर्वता°

31 $Ś_2$ missing (cf v l 7) $D_8$ om $31^{abc}$ (cf v l 30) — $^a$) B (except $B_1$) $Dc_1$ $D_{4, 7, 8}$ S चामरापी( $D_8$ °पिं )डकधरा, $D_5$ °पिंडकवचा — $^b$) $K_{1, 2}$ स्रस्तांत. $K_{1-3}$ $D_1$ नयनात्मका (for नयनासव) $Dc_1$ $D_5$ ध्वस्तांत्रनयनासव°; $D_6$ सभ्रांतनयनासव.. — $^d$) $M_{1, 2}$ पार्थबाणाहता क्षितौ.

32 $Ś_2$ missing (cf v l 7) — $^a$) $K_1$ $D_5$ विप्र मिद्धासिनखराश्च. $Dn_1$ विप्रविद्धा°, $D_2$ विप्रवद्धासनवराश्च; $D_6$ विप्रविद्धासनशराश्च; S विप्रविद्धासिनाराचाश्च — $^b$) $Dn_2$ $D_8$ छिन्नचर्मासि, $D_{4, 7, 8}$ $M_5$ °चर्मर्ष्टि, $D_6$ °घर्मर्ष्टि, T $G_{3, 4}$ °वर्मष्टि (for °वर्मर्ष्टि) — $^c$) $D_5$ पातयन्क्षिव- (for पत्तयश्छिन्न) $Ś_1$ $K_1$ Dn $D_8$ चर्माण; $B_{1, 2}$ (marg) $Dc_1$ $D_{7, 8}$ मर्माण (for वर्माण°) — $^d$) B $Dc_1$ $D_{2, 4, 6, 8}$ $M_2$ कृपणा (for कृपणं) $Ś_1$ $K_{1, 2}$ $D_1$ शिश्यिरे; $K_{4, 5}$ $D_{2, 4, 5, 7, 8}$ शिश्यिरे; $Dn_1$ शासिरे (for शेरते) $Dn_2$ $D_8$ कृपाणैर्निशितैर्हता°; $G_5$ शेरते बहवो हता°. — After 32, $Dn_1$ reads $35^{cd}$

33 $Ś_2$ missing (cf. v l 7) — $^a$) $D_6$ तु (for च). — $^b$) $K_5$ Dn $D_{5, 6}$ महद्भि (for पतद्भि°) $D_{1, 2}$ पातितैर् (for पतितैर्) — $^c$) T G $M_{1, 2}$ कूजद्भिर् (for भ्रमद्भिर्) $Ś_1$ $K_{1-3}$ $Dn_1$ नि( $K_1$ $Dn_1$ नि )स्वनद्भिश्च; $K_5$ निप्पत; $Dn_2$ $D_8$ निश्वस°, $D_7$ निष्टनै° (for निष्टन°) $M_{3-5}$ विकूजद्भिर्निष्टनद्भिर् — $^d$) B $Dc_1$ क्रूरम् (for घोरम्) $D_6$ प्रति (for बभौ) S क्रूर विशसन बभौ Cd cites आयोधन (as in text)

34 $Ś_2$ missing (cf v l 7) — $^a$) $Dc_1$ $T_2$ $G_{3, 4}$ सुमहद्भूत, $D_6$ $T_1$ $G_2$ सुमहद्भूत; $G_1$ M महदुद्भूत, $G_5$ सुसमुद्भूत (for महदुद्भूत) — $^b$) S लोहित (for रुधिर) — $^c$) $Dn_1$ रुद्रा, $D_8$ उग्रा (for दुर्गा) — $^d$) S कश्मलायुत (for कबन्धशत)

35 $Ś_2$ missing (cf v l. 7) — $^a$) $B_1$ om बीभत्स $K_1$ $Dn_1$ $D_{3, 7, 8}$ रौद्रयीभत्सुं — $^b$) $Ś_1$ $K_{1, 2}$ Dn $D_{2, 8}$ या( $D_2$ य )तमाहवे (for यान°) $D_5$ सांपातमहाहवे. Ca, d cite यान (as in text). — $Dn_1$ reads $35^{cd}$ after 32 — $^c$) $K_2$ B $Dc_1$ $D_1$ S आक्रीडम्। Cd आक्रीड (as in text), $K_5$ एव (for इव).

तमेवाभिमुखाः क्षीणाः शक्रस्यातिथितां गताः ॥ ३६
सा भूमिर्भरतश्रेष्ठ निहतैस्तैर्महारथैः ।
आस्तीर्णा संबभौ सर्वा प्रेतीभूतैः समन्ततः ॥ ३७
एतस्मिन्नन्तरे चैव प्रमत्ते सव्यसाचिनि ।
व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ३८
तं प्रत्यगृह्णंस्त्वरिता व्यूढानीकाः प्रहारिणः ।
युधिष्ठिरं परीप्सन्तस्तदासीत्तुमुलं महत् ॥ ३९

इति श्रीमहाभारते द्रोणपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## १९

संजय उवाच ।
परिणाम्य निशां तां तु भारद्वाजो महारथः ।
बहूक्त्वा च ततो राजन्राजानं च सुयोधनम् ॥ १
विधाय योगं पार्थेन संशप्तकगणैः सह ।
निष्क्रान्ते च रणात्पार्थे संशप्तकवधं प्रति ॥ २
व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूम् ।

C 7 794
B 7 .03
K 7 20 3

---

36 Ś2 missing (cf v 1 7) —b) D7 T G4 व्याकुलाश्च (for °लाश्च) —c) Dn2 D8 छिन्ना (for क्षीणा) —d) K5 D5 8 [आ]तिथ्यतां; D7 तिथ्यतां (for [अ]तिथितां) Dn1 ययु (for गता)

37 Ś2 missing (cf v 1. 7) Ś1 K2-4 D1 om 37 —c) Dn2 D8 6 विबभौ, D5 च बभौ (for सबभौ) —d) K1 प्रेतैर्; K6 D2 5 8 प्रेत- (for प्रेती) S प्रेतैरिव सचेतनै

38 Ś2 missing (cf. v 1 7) —a) Ś1 K2 5 D1 5 क्रुद्ध, K3 4 D2 क्रुद्धा (for चैव) —b) D6 प्रसक्ते; Cd प्रमत्ते (as in text) K6 D2 5 प्रमुक्त मव्यसाचिना — After 38ab, Dn2 D8 read 7 19 2cd for the first time, repeating it in its proper place, while D6 reads it here only —c) Ś1 K1. 2 व्यूढानीके; K4 °नीक, K5 व्यूढानीकस, D6 व्यूढानीकैस (for °नीकस) —d) T G2-5 अपीडयन्, G1 M अभिद्रवत् (for उपा°)

39 Ś2 missing (cf v 1 7) —b) K6 व्यूढानीका (for व्यूढा°) D8 व्यूढानीकापहारिण, S व्यूढानीकेन पांडवा —c) M6 समीप्सतस् (for परीप्सन्तस्) —d) Dc1 Dn1 D2 4 5 7 8 तुमल (for तुमुल)

Colophon Ś2 missing — *Sub parvan* K5 D2 5 G1 M1 2 संशप्तकवध — *Day of Drona's Generalship* K1 3 D1 द्वितीय(D1 ये)युद्धदिवसे, K3 द्वितीय-दिवसे; Dn2 द्वितीयेह्निके; D8 द्वितीयेह्नि. — *Adhy. name:* K6 त्रैगर्तसैन्यवधः; Dn1 D8.6 संशप्तकयुद्धं. — *Adhy no* (figures, words or both) K3 B1 2 Dn1 D2 8 S 18 (as in text), D3 19 — *Śloka no* Dc1 Dn 39

### 19

1 Ś2 missing up to भार (in 1b) (cf v 1. 7 18, 7) —a) D2 6 G5 M3 परिणम्य (for °णाम्य) D7 तं (for तां) —b) K1 D7 G3 भरद्वाजो (for भार°) G6 प्रतापवान् (for महारथ) —c) K4 5 Dn1 बहु कृत्वा K4 D1 तु, K6 D2 5 स (for च) Ś1 K1 2 D1 तथा (for ततो) K3 B Dc1 Dn2 D8 6 उक्त्वा सुबहु राजेन्द्र (B2-5 °द्र), G3-5 M2 5 बहुयोक्त्वा ततो (G5 वचो, M3. 5 तदा) राजन् —d) K3 B Dc1 Dn2 D2 3 6 S वचनं वै (D2 च), K4 5 राजत च (K4 om च); D1 राजान त (for राजान च)

2 Ś2 missing (cf. v 1 1) —a) K5 Dn1 D2 4 5 7 8 पार्थस्य (for पार्थेन) S विधाय गोप्तृन्पार्थस्य —b) K1 4 B1 D (except D1) संसप्तक (for सश प्तक) Ś1 K1 2 -गणान्प्रति, D6 -गणै पुन (for गणै सह) — Dn2 D2 read 2cd for the first time after 7 18 38ab, while D6 reads it after 7 18 38ab only —c) B Dc1 D1 तदा; Dn1 रणे, D3 7 8 S रण (for रणात्) T G3 4 प्राप्ते (for पार्थे) —d) K4 Dc1 Dn1 n2 (both times) D3 3 (both times) 4-8 समप्तक (for संशप्तक) K5 वधान्, Dc1 D3 7 8 बलं; Dn2 (first time) रथं (for वध),

3 Ś2 missing (cf v. 1. 1), —b) T G3 अनी

अभ्ययाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ॥ ३
व्यूहं दृष्ट्वा सुपर्णं तु भारद्वाजकृतं तदा ।
व्यूहेन मण्डलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥ ४
मुखमासीत्सुपर्णस्य भारद्वाजो महारथः ।
शिरो दुर्योधनो राजा सोदर्यैः सानुगैः सह ॥ ५
चक्षुषी कृतवर्मा च गौतमश्चास्यतां वरः ।
भूतवर्मा क्षेमशर्मा करकर्षश्च वीर्यवान् ॥ ६
कलिङ्गाः सिंहलाः प्राच्याः शूराभीरा दशेरकाः ।
शका यवनकाम्बोजास्तथा हंसपदाश्च ये ॥ ७
ग्रीवायां शूरसेनाश्च दरदा मद्रकेकयाः ।
गजाश्वरथपत्त्यौघास्तस्थुः शतसहस्रशः ॥ ८
भूरिश्रवाः शलः शल्यः सोमदत्तश्च बाह्लिकः ।
अक्षौहिण्या वृता वीरा दक्षिणं पक्षमाश्रिताः ॥ ९
विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः ।
वामं पक्षं समाश्रित्य द्रोणपुत्राग्रगाः स्थिताः ॥ १०
पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौण्ड्रमद्रकाः ।

---

किर्नीं (for महाचमूम्) —c) Dn2 D5 प्रत्ययाद् (for अभ्य°) D5 भरतश्रेष्ठ —d) D5 धर्मराजं (for धर्मराज).

4 Ś1 missing (of v l 1). —a) K3 B Do1 Dn1 D1 व्यूढ, T G1-4 M व्यूढां; G5 व्यूढवान् (for व्यूह). D6 तु सौपर्णं, S सुपर्णेन (for सुपर्णं तु) —b) B Do1 भारद्वाजेन त सदा; D4 7 भारद्वाजन्(D4 °त)त सदा; S भारद्वाजस्य ता चमूं (G5 °मून्). —c) S मंडलार्धेन (T G2 °र्थेन; G5 °र्धे तु) त व्यू(G5 तव्यू)हं. —d) Ś1 Dn2 D5 प्रतिव्यूह्य; K1 2 D6 प्रतिव्यूह (for प्रत्यव्यूहद्).

5 Ś1 missing up to भार (of v l 1). —a) D5 सुखम् (for मुखम्). Ś1 K (except K5) D1 अस्य; B Do1 Dn2 G1 2 M1 2 त्वासीत; D4 7 8 आस्तां; T G3-5 M3-5 चासीत् (for आसीत्) —b) Dn1 महायशा (for °रथ) —d) Ś1 B3 4 S (except G2) सोदरैः; B1 सौदर्यं; Do1 Dn2 D5 8 सौदर्यैः; D4 6 7 सौदार्यैं (for सोदर्यैं) M5 सानुजै (for °गै) B Do1 S वृत° (for सह)

6 a) B1 D1 2 कृतवर्मासीद्; D4 7 8 गौ(D7 गो)-तमश्चास्य (for कृतवर्मा च). —b) K4 D1 [अ]च्येतां (for [आ]स्यतां) D5 स्वय; G2 गत (for वर) B3 गौतमश्चास्य भारत; D4 7 8 कृतवर्मास्त्रवित्तम —c) K3 B Do1 भूतधर्मा, K5 Dn1 D5 6 कृतधर्मा; Dn2 D5 कृतशर्मा (for भूतवर्मा) K4 क्षेममर्मा, B1 2 °कर्मा, Dn1 T G3-5 °धन्वा, Dn2 D6 °शर्मा च (hypermetric), D4 7 °चर्मा; D5 M °वर्मा, G1 °वर्म (for °शर्मा) —d) B D1 2 करकाक्षश्च, Do1 करकाख्यश्च; Dn2 कर्माक्षश्चैव, D4 6 कद्(D6 री)कर्पश्च; D7 करकश्चैव्ये; D8 करकर्णश्च, T G3-5 करभश्च सु; G1 M1 करवर्पश्च (for °कर्षश्च).

7 Ś1 K1-4 D1 om. 7. —a) S (except T G2 5) सिंहळा —b) K5 D5 T G3 शूराभीर, B2, 3 5 Dn1 शूद्राभीरा, D4 7 8 शूरानीरा (for शूराभीरा). K5 T G3 M6 कशेरुका, B1 G1 2, 4 M2-4 दशेरुका; D4 दमेरका, D6 दशीरका, G5 दशैरका, M5 कशेरुका (for दशेरका°) —d) B Do1 S (except T) हंसपथाश्च (for °पदाश्च).

8 a) K5 गैवेया° (for ग्रीवायां). K1 शार (for शूर) B (except B1) तु (for च) —b) K5 Dn D3 4 6 मद्रकैकया; D7 8 मंडुकैः सह; G1 M मद्र केकयै (for °केकया). —c) D4 गवाश्वरथ; D2 गजाश्व रथ; T G1-3 M रथाश्वगज; G4, 5 रथाश्व गज (for गजाश्वरथ) D5 पत्तौघास्; G1 M पत्त्यौ(M5 °त्यो)घैस् (for पत्त्यौघास्). —d) K4 D5 तस्थौ (for तस्थुः). B Do1 S तस्थु परमदंशिता° (B Do1 T1 °शिता, G1, 4 °सितै; G5 °शितै).

9 a) K3 B Dc1 तथा; K4 lacuna (for शल) —b) Ś1 D4 सौ(D4 सो)मदत्तिश्च, S (except G2) सोमदत्तोथ (for °दत्तश्च) K4 D1 वीर्यवान् (for बाह्लिक) —c) D6 S (except G5 M6) अक्षोहिण्या; D7 व्यक्षो° (for अक्षौ°) D8 S शूरा (for वीरा). —d) K3 4 B Do1 Dn D1-3 6 पार्श्वम् (for पक्षम्) K3 B Do1 Dn D1 3 6 आस्थि(B1 °ग)ता° (for आश्रिता)

10 a) Do1 D4 विंदानुविंदाव्, D7 विंक्षानुविंदाव्, G3 विंदानुविंदाव् (for विन्दानुविन्दाव्) —b) Ś K3 D1 कांभोजश् —c) N पार्श्वं (for पक्ष). Ś1 उपाश्रित्य (for समा°) —d) K4 द्रोणपुत्रानुगा स्थिता°; B Do1 Dn1 D1 2 6 °पुत्राग्रत स्थिता; Dn2 D5 द्रोणपुत्रादयस्तथा; D4, 7 8 °पुत्रमुखा स्थिता; D6 द्रोणपुत्र पुरोगमाः; S स्थिता द्रोणसुताग्रगा° (G5 M1, 2 °हा°; G4 [inf. lin.] °त.).

गान्धाराः शकुनिप्राग्र्याः पार्वतीया वसातयः ॥ ११
पुच्छे वैकर्तनः कर्णः सपुत्रज्ञातिबान्धवः ।
महत्या सेनया तस्थौ नानाध्वजसमुत्थया ॥ १२
जयद्रथो भीमरथः सांयात्रिकसमो जयः ।
भूमिंजयो वृषक्राथो नैषधश्च महाबलः ॥ १३
वृता बलेन महता ब्रह्मलोकपुरस्कृताः ।
व्यूहस्योपरि ते राजन्स्थिता युद्धविशारदाः ॥ १४
द्रोणेन विहितो व्यूहः पदात्यश्वरथद्विपैः ।
वातोद्धूतार्णवाकारः प्रवृत्त इव लक्ष्यते ॥ १५
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
सविद्युत्स्तनिता मेघाः सर्वदिग्भ्य इवोष्णगे ॥ १
तस्य प्राग्ज्योतिषो मध्ये विधिवत्कल्पितं गजम् ।
आस्थितः शुशुभे राजन्नंशुमानुदये यथा ॥ १७
माल्यदामवता राजा श्वेतच्छत्रेण धार्यता ।
कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना ॥ १८
नीलाञ्जनचयप्रख्यो मदान्धो द्विरदो बभौ ।

---

11 [b]) Dn2 D2 मंदका (for मागधा) Ś K1-3 पाडुमद्रका, B Dc1 पौंड्रमद्रका, D4 8 पौंड्रमस्तका (for पौण्ड्रमद्रका) — [c]) K1 M1 गाधार Ś K3-5 B1 Dn1 D1 2 6 शकुना (D6 ना) प्राच्या, K4 B1 Dc1 शकुनि (K1 °न) प्राच्या, B3 8 शकुनि प्राड्या (B3 [marg] °च्या), B5 T G4 शकुनिप्राड्या (B5 च्या), Dn2 G1 6 M शकुनिप्याग्रा (G1 6 M °प्राग्रा), D3 6 शाकुना (D6 °ना) प्राच्या, D4 7 8 शुनका (D4 °का) प्राच्या, G2 3 शकुना प्राड्या (G2 °ड्या) (for शकुनि प्राग्र्या) — [d]) Ś1 K3-4 पार्वतेया B1-3 Dc1 D1 वशातय

12 K6 om 12[c]-13[b] — [a]) Dc1 पृष्टे (for पुच्छे) — [c]) B3 सार्धं (for तस्थौ) — [d]) B1-3 5 Dc1 T G2-6 नानाजन, B1 तस्थौ जन, G1 M नानादेश (for °ध्वज) K1 -समुत्थिता, B1 G5 पदोत्थया, Dn D2 3 6 -समुच्छ्रया (Dn1 °य), D4 6-8 समु( D7 °म)-च्छ्रया, T G2-4 समृद्धया (for -समुत्थया)

13 K6 om 13[ab] (cf v 1 12) — [b]) Ś1 सांया त्रिकमहो जय, K3 °महोजय, K4 D1 सपा( K4 °या) तिरथमो जय, B1 2-5 Dc1 सपा( Dc1 °म )तिर्क्रपमो जय; B2 D2 6 सपातिर्यासमो जय, Dn1 सयातिर्वासनो जय, Dn2 शर्यातिश्च सता जय, D3 सयातिश्च सत जय, D4 7 सर्यातिर्यासनेज( D4 °क )य, D6 सर्यातिश्च शतजय, D8 शर्यातिर्यासमेजय, S सया( G2 °पा )ति स( G1 M1 2 स् )जयो जय — [c]) D1 भूमिजन्यो (for भूमिंजयो) Dc1 वृषक्रायो, Dn1 वृष क्रायो, Dn2 D3 6 जयक्रोधो, D4 7 विपक्रोधो, D8 विपक्राथो (for वृष°) Ś K (except K8) D5 भूमिंजयोभिपक्रा( K1 °प क्रा )थो, S भूमिंजयश्च वृषवो (G1 6 M वृषको) — [d]) Dn1 नैमिषश्च, D6 (inf lin. as in text) नैष घस्य, T G2-4 निशठश्च; G1 M निषधश्च, G6 निशाकश्च (for नैषधश्च). Ś K1-3 Dn1 G6 महारथ (for °बल).

14 [b]) K3 पुरस्कृता, K5 D2 6 पुरःसरा, G6 पुर * तार (for पुरस्कृता) Cv as in text — [c]) D1 गृहस्य (for व्यूहस्य) B1 4 Dc1 D2 [उ]रसि ते, B3 5 6 [उ]परितो, Dn D3 4 7 8 S परितो (for [उ]परि ते) — [d]) T2 G2-4 युधि (for युद्ध)

15 [a]) D4 7 8 रचितो, D6 सहितो (for विहितो) — [b]) S पत्त्यश्वरथकुञ्जरैः — [c]) K6 ततो (for वातो) K1 वातोद्धूतार्णवाकारा — [d]) K3-5 B3 8 (both marg) 4 D1 8 S प्रनृत्त, B1 प्रवृत्य; Dn2 D5 6 प्रमत्त (for प्रवृत्त) B1 दृश्यते (for लक्ष्यते)

16 [a]) B (except B3) Dc1 यस्य (for तस्य) Ś1 प्रपपेभ्यो, K1 प्रयपेभ्यो, K3 प्रयगेभ्यो, K4 प्रपा तेभ्यो, G3 प्रपातेन, C4 d प्रपक्षेभ्यो (as in text) — [b]) Ś1 D6 निष्पततो, K5 विष्ठनति, D1 2 4 5 8 निपतति, S निष्क्रा( G5 °क्र )मति (for निष्पतन्ति) — [c]) G5 विद्युत्स्तनिता मेघौघा — [d]) S Cv दिवि (for सर्व ) Ś K3 इवोष्णगौ, K1 इवोरगौ, Dn2 इवो ष्मके (for इवोष्णगे)

17 [a]) Dn2 D3 राजन्, D6 राजा (for मध्ये) — [b]) D6 कलित; G3 कल्पिते (for कल्पित) G3 गजे (for गजम्) — [c]) K5 B1 आस्थित (for आस्थित) S आस्थितोभूत्स भगवान् — [d]) S (except G5) Cv उदयं (for उदये)

18 [a]) Ś K1-4 राज्ञा; K5 D (except Dc1 Dn2 D6) राजन् (for राजा) — [b]) Ś K1-3 राजता; K5 D5 भारत, D6 शोभिना; S वीर्यवान् (for धार्यता) Cv as in text — [c]) K5 कार्तिके (for कृत्तिका) — [d]) K5 Dn D3 6 पूर्ण( K5 °र्णि )मास्याम् (for पौर्ण°). B1 4 इवोडुराट् (for इवेन्दुना)

19 [a]) B3 5 -मेस्यो (for -प्रख्यो) — [c]) Ś1 K3-4

अभिवृष्टो महामेघैर्यथा स्यात्पर्वतो महान् ॥ १९
नानानृपतिभिर्वीरैर्विविधायुधभूषणैः ।
समन्वितः पार्वतीयैः शक्रो देवगणैरिव ॥ २०
ततो युधिष्ठिरः प्रेक्ष्य व्यूहं तमतिमानुषम् ।
अजय्यमरिभिः संख्ये पार्षतं वाक्यमब्रवीत् ॥ २१
ब्राह्मणस्य वशं नाहमियामद्य यथा प्रभो ।
पारावतसवर्णाश्व तथा नीतिर्विधीयताम् ॥ २२
धृष्टद्युम्न उवाच ।
द्रोणस्य यतमानस्य वशं नैष्यसि सुव्रत ।
अहमावारयिष्यामि द्रोणमद्य सहानुगम् ॥ २३
मयि जीवति कौरव्य नोद्वेगं कर्तुमर्हसि ।
न हि शक्तो रणे द्रोणो विजेतुं मां कथंचन ॥ २४
संजय उवाच ।
एवमुक्त्वा किरन्बाणान्द्रुपदस्य सुतो बली ।
पारावतसवर्णाश्वः स्वयं द्रोणमुपाद्रवत् ॥ २५
अनिष्टदर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितम् ।
क्षणेनैवाभवद्द्रोणो नातिहृष्टमना इव ॥ २६
तं तु संप्रेक्ष्य पुत्रस्ते दुर्मुखः शत्रुकर्शनः ।

---

B3–5 Dc1 Dn1 D1 अतिवृष्टो, B2 D6 अतिवृष्टैर्, D8 अभिदृष्टो; T G1 3–5 °वृष्ट्या (for °वृष्टो) D4 7 8 G2 यथा मेघैर् (for महामे ).

20 a) B4 Dc1 भूपतिभिर् (for -नृपतिभिर्) —b) D2 5 पौरुषै ; D4 -दक्षिणै ; D7 8 -लक्षणै (for भूषणै ). —c) Ś1 K2 पार्वतीय°, Ś2 पर्वतीयै ; K4 पार्वतेयै (for °तीयै )

21 a) Dn1 वीक्ष्य (for प्रेक्ष्य) —b) Ś K1–3 त व्यूहम् (by transp ) Dn2 D8 व्यूह द्रोणेन कल्पित —c) D5 अजेयम् (for अजय्यम्) G1 5 M1–3 5 सखे; G4 संघे (for सख्ये )

22 a) D4 7 8 वशे नाहम्; T G2–5 वश नाद्य, G1 M यथा नाह (for वश नाहम्) —b) K1 D4 7 8 इयाम्यद्य (for °मद्य) Cd cites इयां (as in text). K3 5 D5 यथा विभो, Dn1 D4 7 8 महाहवे (for यथा प्रभो) T G3–5 गच्छेयं भरतर्षभ (G4 °त), G1 M वशं गच्छेयमद्य वै; G2 गच्छेय पुरुषर्षभ —c) Ś2 परावत ; D4 7 8 पारापत (for पारावत-) Ś K1 2 4 D1 समाश्वास्य (for -सवर्णाश्व ) T G2–5 पारापताश्व (T °पताश्व, G2 °पतश्च) भद्र ते.

23 D1 धृतराष्ट्र (for धृष्टद्युम्न) —b) K2 वश्यं Ś1 B1 Dn2 D3 T G1 2 M1–3 नेष्यसि; K1 नेपसि, K3 नेष्यामि; Dn1 नेष्यति; D5 एष्यसि (for नैष्यसि) G1 M सयुगे (for सुव्रत). D3 वशमेष्यति शङ्कसे —d) B1 न सहाय°; D4 महानुगं; T G4 सहानुग° (for °नुगम्).

24 a) K2 D4 यदि (for मयि) Dn2 S कौन्तेय (for कौरव्य) —b) G4 मोद्वेग (for नोद्वेग) —c) S न हि द्रोणो रणे शक्तो — D5 om (hapl.) 24d–26c. —d) K5 M3 5 मा (for मां) Dn1 मां च जेतुं कथंचन

25 D5 om 25 (of v 1 24) —b) S (except G5) [आ]त्मजो (for सुतो) —c) D4 8 पाराय( D8 °प )त (for पारावत ) Ś1 सुपर्णाश्व , Ś2 सवर्णश्च, K1 2 सुपर्णस्य, K3 सपर्ण* (for सवर्णाश्व ) —d) S अभिद्रवत् (for उपा° )

26 D5 om 26abc (of v l. 24). —a) K1 3 4 अरिष्ट- (for अनिष्ट-). Dc1 Dn1 मत्वा (for दृष्ट्वा) —b) B3 T G3–5 उपस्थित (for अवस्थितम्) —d) D8 विभु (for इव) — After 26, S ins

142* स हि जातो महारौद्रो द्रोणस्य निधनं प्रति ।
मर्त्यधर्मतया तस्माद्भारद्वाजो व्यमुह्यत ।
नाशकत्त तत कश्चिदनीके प्रतिवीक्षितुम् ।
तत. किरन्निपूस्तीक्ष्णान्द्रुपदस्य वरूथिनीम् ।
भारद्वाजो ययौ तूर्णं पार्षत वर्जयन्युधि । [5]
द्रुपदस्य महत्सैन्य वारयामास ब्राह्मण ।

[ (L 1) G2 महाराज (for °रौद्रो) —(L 2) G2 भरद्वाजो G1 M1 [ऽ]प्यमुह्यत (for व्यमु°) —(L 3) M3 4 नाशकत T G2 तत्र कं (T2 त) (for त तत°) T G2 M1 2 किंचिद्, G3–5 कश्चिद् (for कश्चिद्) T G2 अनीक (for अनीके) ]

27 D8 om 27 —a) K5 B1 तत्र, D4 7 8 ते तु (for तं तु) S ते पुत्रो (by transp ) —b) Ś K B Dn2 D1 2 5 6 शत्रुकर्षण° (D5 °ण) —c) B1 D1 2 5 6 T G2–5 चिकीर्षुर् (for °र्षन्) —d) B3 Dc1 अथाह्वयत्; D6 निवारयन् (for अवारयत्).

प्रियं चिकीर्षन्द्रोणस्य धृष्टद्युम्नमवारयत् ॥ २७
स संप्रहारस्तुमुलः समरूप इवाभवत् ।
पार्षतस्य च शूरस्य दुर्मुखस्य च भारत ॥ २८
पार्षतः शरजालेन क्षिप्रं प्रच्छाद्य दुर्मुखम् ।
भारद्वाजं शरौघेण महता समवारयत् ॥ २९
द्रोणमावारितं दृष्ट्वा भृशायस्तस्तवात्मजः ।
नानालिङ्गैः शरव्रातैः पार्षतं सममोहयत् ॥ ३०
तयोर्विषक्तयोः संख्ये पाञ्चाल्यकुरुमुख्ययोः ।
द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरैः ॥ ३१
अनिलेन यथाभ्राणि विच्छिन्नानि समन्ततः ।
तथा पार्थस्य सैन्यानि विच्छिन्नानि क्वचित्क्वचित् ॥ ३२
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ ३३
नैव स्वे न परे राजन्नज्ञायन्त परस्परम् ।
अनुमानेन संज्ञाभिर्युद्धं तत्समवर्तत ॥ ३४
चूडामणिषु निष्केषु भूषणेष्वसिचर्मसु ।
तेषामादित्यवर्णाभा मरीच्यः प्रचकाशिरे ॥ ३५
तत्प्रकीर्णपताकानां रथवारणवाजिनाम् । C 7 817 B 7 20 35 K 7 20 19

D1 2 5.6 T G2-5 चिकीर्षुर् ( for °र्षन् ) —d) B5 Dc1 अथाहयत्, D5 निवारयन् ( for अवारयत् )

28 K3 om (hapl) 28–29 B1 D5 (sec m) read 28–29 on marg —a) Dc1 Dn1 D5 6 7 8 तुमुल° —b) D3 समरूपम् B Dc1 S सुघोर सम( G5 °मु )पद्यत —c) D4 7 पार्षतश्च ( for °तस्य ) —d) S सयुगे ( for भारत )

29 K3 om. 29 (cf v 1 28) B1 D5 (sec m) read 29 on marg —b) G1 M आच्छाद्य ( for प्रच्छाद्य ) G3 भूतलं ( for दुर्मुखम् ) —c) Ś K1.4 Dn1 G2 शरौघेन —d) D7 महतां Dn1 S समवाकिरत् ( Dn1 G5 °रन् ).

30 K4 D1 om (hapl) 30 —a) K1 अपारित, Dn1 आचरितं, D8 (before corr) आत्वरितं ( for आवा° ) —b) D3 कृपायस्तस्, D5 वृथा°, D8 मृशा युश्च, S (except G3) मृशं यत्तस् ( for भृशायस्तस् ). Cd cites आयस्त° —d) Ś1 Dn2 D5 6 समवारयत्, T G2-5 °योधयत्, G1 M °वाकिरत् ( for °मोहयत् )

31 a) K1 विमक्तयो, K5 B3 (orig) D5 विमु°, B3 (marg) विश° ( for विष° ) G1 5 M1 2 सर्गे, G1 M3 मध्ये ( for संख्ये ) —b) K4 T G2-4 M1 2 पांचाल ( for पाञ्चाल्य ) S -पुत्रयो ( for -मुख्ययो° ) —After 31ab, T G2 ins

143* अभवत्तुमुल युद्ध परस्परवधैषिणो ।

—c) K2 3 द्रोणं Ś2 K1-3 D5 युधिष्ठिर Ś K1-4 मन्ये ( for सैन्य ) —d) K5 D5 बहुधो ( for बहुधा ) K4 विधमत् ( for व्यध° ) S transp बहुधा and व्यधमद्

32 a) K2 अनेन च ( for अनिलेन ) — Dn1 om 32cd —c) D4 7 8 तत° ( for तथा ) Dn2 D5 6 पार्षत ( for पार्थस्य ) S तथा सैन्यानि पांडूनां —d) S दृश्य( G2.4 M5 °श्य )ते स ( for विच्छिन्नानि ) B4 om the second क्वचित्

33 a) D7 om (hapl) from तद्युद्धम् up to संज्ञा ( in 34c ) K5 एव, D5 6 अपि ( for इव ) K1 G5 अभवद् ( for इव तद् ) —c) B3 4 युद्ध ( for राजन् ) — After 33, S ins

144* नैव खं न दिशो भूमिर्वभासे न च भास्कर ।

[ T2 G3 4 द्यौ ( for ख ) T G2-4 न भामे न, M3-5 न बभासे ( by transp ) ]

34 D7 om up to संज्ञा ( cf. v. l 33 ) —b) D5 om from अज्ञायन्त up to युद्ध ( in 34d ) Ś1 K3 4 B3-5 Dn D2 8 आज्ञायत, K5 आज्ञायत, D1 आज्ञायत्य, T G2-4 विज्ञायत; G1 M व्यज्ञायत ( for अज्ञायन्त ) —c) Ś2 ज्ञायमान तु, K2 4 D1 ज्ञायमानेन; D4 अमुनानेन ( for अनुमा° ) Ś1 मुह्यमानमसज्ञाभिर् —d) Dn1 युत युद्धमवर्तत, D5 युद्ध निर्भर्यादमवर्तत ( hypermetric )

35 a) G1 M1 2 4 5 चूळामणिषु ( for चूडा° ) —b) M2 [अ]पि ( for [अ]सि ) Ś K1-3 5 B D ( except Dn2 D8 ) [अ]पि च( K5 म )र्मसु, K4 [अ]य धर्मसु ( for [अ]सिचर्मसु ) — G1 reads 35cd twice —d) N रश्मय ( for मरीच्य ) K5 D7 8 प्रचकासिरे; D1 प्रचकाशी*; D5 समकाशिरे ( for प्रचकाशिरे )

36 b) D2 ( marg as in text ) गजानां परमद्विपै ( = 38b ), S रथवाजिनृहस्तिनां —c) Ś K1-4 D5 बलाकासदृशाभ्राभ ( D5 °त ), K5 D1 °भ्रां( D1 °भ्रा )त

बलाकाशबलाभ्राभं ददृशे रूपमाहवे ॥ ३६
नरानेव नरा जघ्नुरुदग्राश्च हया हयान् ।
रथांश्च रथिनो जघ्नुर्वारणा वरवारणान् ॥ ३७
समुच्छ्रितपताकानां गजानां परमद्विपैः ।
क्षणेन तुमुलो घोरः संग्रामः समवर्तत ॥ ३८
तेषां संसक्तगात्राणां कर्षतामितरेतरम् ।
दन्तसंघातसंघर्षात्सधूमोऽग्निरजायत ॥ ३९
विप्रकीर्णपताकास्ते विषाणजनिताग्नयः ।
बभूवुः खं समासाद्य सविद्युत इवाम्बुदाः ॥ ४०
विक्षरद्भिर्नदद्भिश्च निपतद्भिश्च वारणैः ।
संबभूव मही कीर्णा मेघैर्द्यौरिव शारदी ॥ ४१
तेषामाहन्यमानानां बाणतोमरवृष्टिभिः ।
वारणानां रवो जज्ञे मेघानामिव संप्लवे ॥ ४२
तोमराभिहताः केचिद्बाणैश्च परमद्विपाः ।
वित्रेसुः सर्वभूतानां शब्दमेवापरेऽव्रजन् ॥ ४३
विषाणाभिहताश्चापि केचित्तत्र गजा गजैः ।
चक्रुरार्तस्वरं घोरमुत्पातजलदा इव ॥ ४४
प्रतीपं ह्रियमाणाश्च वारणा वरवारणैः ।

सदृश ; B8 (marg as in text) °सबलाभ्रातं ; Do1 Dn2 °सहिताभ्रांत (Do1 °भ्राभ) ; D3 6 °सदृशाभाम, D4 7 8 °सयुताभ्राभ ; D4 (marg sec m) °दायुताभ्राभ ; T G3 4 बलाकसदृशाभं तद् ; G5 बलाभ्राभं बलानां हि — [d]) D4 6–8 सदृश (for ददृशे). D8 om. हवे

37 [a]) D6 नरान्वर (for नरानेव). D4 7 8 T G2 M3–5 राजन् (for जघ्नुर्). K4 D1 नराश्चैव नराअघ्नुर् — [b]) T G1–4 M जघ्नुरुग्रा ; G5 * * रुग्र (for उदग्राश्च) K4 B2 महाहयान्, Dn1 हयान्हया° (by transp). — [c]) Dn D3. 5 रथाश्च ; T G2–5 रथिनो (for रथांश्च). — [d]) B2 3 5 Do1 Dn2 D3. 6 वारणान् (for वारणा). B2–5 Do1 Dn2 D3 6 व(Dn2 D3 प)रवारणा°, D4 7 8 वारणात्रणे (for वरवारणान्).

38 [a]) K5 संमूर्छित ; D4. 8 समुत्थित° (for समुच्छ्रित) — [b]) S द्विपानां (for गजानां) Ś2 च पर- (for परम). — [c]) Dn1 D4 7 8 तुमलो ; D2 5 तुमलं. D2. 5 घोरं — [d]) D2 5 संयुगं ; D4 संग्राम° (for संग्राम°). B Do1 T समपद्यत ; G M °जायत (for °वर्तत).

39 M3 om (hapl) 39 — [a]) K1 B1–3 संशक्त (for संसक्त). D3 गात्राणि (for -गात्राणां). — [b]) Dn2 D3. 6 निघ्नताम् (for कर्षताम्). — [c]) D4 संहर्षे ; D7 सहर्षे, D8 सघर्षे (for सघात). B1–3 Do1 Dn1 D4 7 संहर्षात्, D6 -संकर्षात् (for सघर्षात्)

40 [a]) D4 चिप्रकीर्णं (for °कीर्ण). — [b]) Ś K1–3 -जनिताश्च(K1 °श्चि)या° (for °ताग्नय°) — [c]) D4 बभूव D3 सं (for ख) B3 समापद्य (for °साद्य) S बभु(T G2 °भ्रु ; G5 M1 2 °हु)राकाशमाचार्ये (G5 °विश्य) — [d]) Ś K1 3 सविद्युत्क (K3 °रक्ता) ; K2 सविद्युर्कम् (sic) (for सविद्युत). K1 D4 इवांबुद

41 D4 om 41[c]–42[b]. — [a]) Ś1 K B Dn D1 2 6 विक्षिपद्भिर्, D3 5 विक्षपद्भिर् (for विक्षरद्भिर्). Ś K1–3 Dn D2 3 5–8 पतद्भिश् ; K4 यतद्भिश् ; K5 क्षितद्भिर (sic), Do1 निपतद्भिश् (hypermetric) (for नदद्भिर्) — [b]) B4 lacuna, Dn1 D3 निष्पतद्भिश्च ; Dn2 D3 6 नदद्भिश्चैव (for निपतद्भिश्च). — [c]) G1 M सा बभूव (for संबभूव). — [d]) D3 मेघौघैरिव K4 सारदी ; Dn2 D6 शारदा, S वार्षि(G1 °र्षं)की (for शारदी).

42 D4 om 42[ab] (cf v l 41). — [a]) Dn2 D3 6 बहुशो हन्यमानानां. — [b]) Do1 रणे (for बाण). B4 ऋष्टिभि (for वृष्टिभि°). — [c]) Ś K1. 2 रवैर् ; S रणे (for रवो). D6 (marg as in text) जज्ञे — [d]) D1 एव (for इव). K5 नि स्वन° ; S (except G5) संप्लुव (for संप्लवे)

43 Ś1 K (except K5) om 43[b]–44[a] — [b]) Ś2 D1 om (hapl) from बाणैश्च up to केचित् (in 44[b]) — [c]) Dn1 विविशु° (for वित्रेसु) K5 B Dn1 D2 5 सर्वनागानां, Dn2 D3 °तो नागा° ; D6 पर्वतो नागा° (for सर्वभूतानां). S वित्रस्ता सर्वशब्दानां — [d]) Dn1 शब्द ; Dn2 D3 शब्दाद्, D6 शब्दान् (for शब्दम्) T G2 परं सृजन्, G1 M3–5 [आ]हवे सृजन् (M5 °जत्) ; G3–5 [अ]परं सृजन् (for [अ]परेऽव्रजन्).

44 Ś1 K (except K5) om. 44[a] Ś2 D1 om. up to केचित् (for both, cf. v. l 43). — [a]) K5 D (except Do1, D1 om) T G2–5 -हता केचित् (for -हताश्चापि) — [b]) Dn2 D3 6 महागजै° (for गजा गजै°) K5 Dn1 D2 4. 5 8 तत्र त(D6 ततस्त)त्र महागजै°. — [c]) B4 Do1 D2 आर्तस्वन (for °स्वरं) Ś K1–3 अ (Ś2 आ)क्रोशत स्वय घोरम्.

त्रस्तामाश्वासयन्सेनामत्रस्तो वाक्यमब्रवीत् ॥ ९
अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते ।
अहमेनं ग्रहीष्यामि जीवग्राहं न संशयः ॥ १०
एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्यवान् ।
सुकल्पितेनोह्यमानः स्यन्दनेन विराजता ॥ ११
सोऽभिमन्युं त्रिभिर्बाणैर्विद्ध्वा वक्षस्यथानदत् ।
त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः ॥ १२
स तस्येष्वसनं छित्त्वा फाल्गुनिः सव्यदक्षिणौ ।
भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् ॥ १३
दृष्ट्वा रुक्मरथं रुग्णं पुत्रं शल्यस्य मानिनम् ।
जीवग्राहं जिघृक्षन्तं सौभद्रेण यशस्विना ॥ १४
संग्रामदुर्मदा राजन्राजपुत्राः प्रहारिणः ।
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः ॥ १५
तालमात्राणि चापानि विकर्षन्तो महारथाः ।
आर्जुनिं शरवर्षेण समन्तात्पर्यवारयन् ॥ १६
शूरैः शिक्षाबलोपेतैस्तरुणैरत्यमर्षणैः ।
दृष्ट्वैकं समरे शूरं सौभद्रमपराजितम् ॥ १७
छाद्यमानं शरव्रातैर्हृष्टो दुर्योधनोऽभवत् ।
वैवस्वतस्य भवनं गतमेनममन्यत ॥ १८
सुवर्णपुङ्खैरिषुभिर्नानालिङ्गैस्त्रिभिस्त्रिभिः । C 7 1821 B 7 45 19 K 7 45 19

---

K3 Dn D2 G3-5 M1 2 आश्वासयत् ( for °यन् )

10 D7 om 10ᶜ–11ᵇ Before 10, G1 ins रुक्मरथ° —ᵃ) D4 वै ( for व ) —ᵇ) S न मामेषो ( G1 5 M नैष मास )भिवर्तते —ᶜ) D4 5 हनिष्यामि ( for ग्रही° )

11 D7 om 11ᵃᵇ (cf v l 10) —ᵃ) K4 D1 T G1 2 M स ( for तु ) Do1 (marg sec m as in text) उक्तस्तु —ᶜ) S महता ( for [उ]ह्यमानः )

12 ᵇ) Ś K ( except K5 ) D1, 2 5 भित्त्वा ( for विद्ध्वा ) —ᶜ) K1 त्रिभिश्च ( for त्रिभिश्च ) —ᵈ) G5 तु ( for च ). D4 शरै° ( for त्रिभि ) — After 12, S ins

306* सोऽभिमन्युस्ततस्तस्य छित्त्वा प्रणदन्बली ।

[ G4 तस्य ( for ततस् ) G4 छित्त्वा, M4 5 तेन ( for तस्य ) G1 M विद्ध्वा ; G4 बाहू ( for छित्त्वा ) ]

13 ᵃ) Ś1 स तस्येष्वसनेश्छित्वा ; S तस्य सेष्व( G5 °ष्वा )सन सव्य —ᵇ) S दक्षिण च ससायकं —ᶜ) Ś1 स्वक्षत्रक्षि, K5 D2 6 [अ]भिमन्युं ( K5 D2 °न्यु° ); Do1 [अ]स्य धनु° ; Dn1 [अ]क्षिभ्रुवौ, Dn2 तत्स्वाक्षि ; D2 6 सछित्वा ; D8 T G2 स्वक्षिभ्रू ( for स्वक्षिभ्रु )

14 ᵃ) K5 D ( except Do1 D1 8 ) मग्न, S राजन् ( for रुग्ण ). —ᵇ) D6 मानित ; G5 मानिम°. —ᶜ) D1 जिघृक्षार्णं ( for °क्षन्तं ). —ᵈ) S निपातित ( for यशस्विना ).

15 ᵃ) Ś1 समामे. K5 -दुर्मना ( for °दा ) G2 M शल्यपुत्रे हते राजन् —ᵇ) G1 M1 2 ससत्वरा° ( for प्रहारिण ) —ᵈ) D4 स्व*र्ण, M3 5 ( sup lin , orig as in text ) विचित्र ( for सुवर्ण ) G1 M कवच ( for विकृत )

16 ᵃ) S अति ( for ताल ) The portion of the text from चापानि up to स वि ( in 7 47 14ᶜ ) is lost in D4 on missing folios —ᵇ) M3 4 5 ( sup lin as in text ) विष्फारयंतो ( for विकर्षन्तो ) Ś1 Dn D1-3 5-8 T G3-5 महाबला° ( for °रथा° ) —ᶜ) K3 D3 6 7 अर्जुनिं ; Dn1 आगत्य ( for आर्जुनिं ) T G2-5 M3 4 ( inf lin ) 5 रथ( M3 4 शर )वंशेन ( for शर वर्षेण ) —ᵈ) G1 M1 2 समवारयन् ( M1 °यत् ) ( for पर्यवारयन् )

17 D4 missing (cf v l 16) —ᵃ) Ś1 K ( except K5 ) D1 शरैश्चैव ( for शूरैः शिक्षा ) Ś1 शरैः सारफलोपेतस् —ᵇ) K3 B2 3 अस्यम( B3 °ष )र्षणैः ; S अत्य( G1 M1 2 °स्य )मर्षिभि ( for अत्यमर्षणैः ) Dn2 तरुण*त्यमर्षणै°. — G4 om ( hapl ) 17ᶜ–19ᵇ. —ᵈ) Dn1 अपलायिन ; S ( G4 om ) परिवारित ( for अपरा जितम् )

18 D4 missing (cf v l 16). G4 om 18 (cf v l 17) —ᵃ) Ś K1 2 Dn2 D1 अर्द्यमानं ; K2 पीड्य° ; D8 अर्द° ; D6 अर्द्यमाण ( for छाद्यमान ) —ᵇ Ś1 K1 दृष्ट्वा ( for हृष्टो ) Ś1 K1 4 D1 [ऽ]ब्रवीत् ( for ऽभवत् ) —ᶜ) K5 D8 भुवनं ; B ( except B1 Do1 च गृहं ( for भवनं ) —ᵈ) G5 दृष्ट्वा ( for गत N ( D4 missing ) ह्येनम् ; G6 गतम् ( for एनम् ).

19 D4 missing (cf v l. 16) G4 om 19ᵃᵇ v l 17) —ᵃ) D6 विविधैर् ( for इषुभिर् )

7 1821 7 45 18 7 45 19 अदृश्यमार्जुनिं चक्रुर्निमेषाच्चे नृपात्मजाः ॥ १९
ससूताश्वध्वजं तस्य स्यन्दनं तं च मारिष ।
आचितं समपश्याम श्वाविधं शललैरिव ॥ २०
स गाढविद्धः क्रुद्धश्च तोत्त्रैर्गज इवार्दितः ।
गान्धर्वमस्त्रमायच्छद्रथमायां च योजयत् ॥ २१
अर्जुनेन तपस्तप्त्वा गन्धर्वेभ्यो यदाहृतम् ।
तुम्बुरुप्रमुखेभ्यो वै तेनामोहयताहितान् ॥ २२
एकः स शतधा राजन्दृश्यते स्म सहस्रधा ।
अलातचक्रवत्संख्ये क्षिप्रमस्त्राणि दर्शयन् ॥ २३
रथचर्यास्त्रमायाभिर्मोहयित्वा परंतपः ।
बिभेद शतधा राजञ्शरीराणि महीक्षिताम् ॥ २४
प्राणाः प्राणभृतां संख्ये प्रेषिता निशितैः शरैः ।
राजन्प्रापुरमुं लोकं शरीराण्यवनिं ययुः ॥ २५
धनूंष्यश्वान्नियन्तॄंश्च ध्वजान्बाहूंश्च साङ्गदान् ।
शिरांसि च शितैर्भल्लैस्तेषां चिच्छेद फाल्गुनिः ॥ २६
चूतारामो यथा भग्नः पञ्चवर्षफलोपगः ।

---

Ś1 वर्णैस् (for लिङ्गैस्). Ś1 D7 सुतेजितै ; Ś2 K1–3 Dn2 D1 3 6 सुतेजनै, D2 सुतेजसै, D5 सहस्रश ; D8 सुपूजितै (for त्रिभिश्चिभि) — c) D6 G1 M1 2 चार्जुनिं Ś1 अदृश्य कुरवार्जुनिं च (hypermetric) — d) Ś1 K1 नृपात्मज ; Do1 °त्मज

20 D4 missing (cf v l 16). — a) D8 तं वै; D6 तं च; G1 M1 2 चैव (for तस्य) — b) Ś K1–3 D1 तच्च, B2 G1 M1 2 चापि; B3 Do1 यत; D2 6 तत्र, D8 तस्य (for स च) Ś2 K (except K5) D1 भारत (for मारिष) — K1 om (hapl) $20^{c}$–$21^{d}$ — c) Ś1 आच्छिवं, Dn2 आर्दितं (for आचित) Dn1 तस्य पश्याम ; D5 7 8 समपश्याम ; S प्रत्यप(G5 °द) श्याम (for समप) D8 आच्छादितमपश्याम — d) Ś2 K3 4 D1 पर्वतं; Dn1 श्वाविद्ध ; D8 चाविद्धं ; S (except G5) Cv श्वाविड (for श्वाविध) Ś K2 D1 सलिलैर् ; K5 Dn1 D2 5 7 8 शलभैर् ; B3 (marg, orig as in text) कश्मलैर् ; B3 (also marg) शशक ; Cv शयलैर् ; Ca d शललैर् (as in text)

21 D4 missing (cf v l 16) K1 om 21 (cf v l 20) — a) B (except B4) Do1 Dn2 क्रुद्धस्तु ; D5 क्षुधितस् (for क्रुद्धश्च) S स गाढमिषुभिर्विद्धस — b) D7 [अ]र्पित ; T G M1 2 श्वसन् (for [अ]र्दित) M3–5 तोत्त्रैरिव गज श्वसन् — c) K4 5 गंधर्व मस्त्रम् ; D6 गांधर्वशस्त्रम् S गांधर्वीमस्त्रमाया च — d) D8 अस्त्रमायां ; M3–5 रक्षोमायां (for रथ). Ś2 om च. N (D4 missing, K1 om.) भारत (for योजयत्)

22 D4 missing (cf v l 16) — a) S ये(G1 M1 2 यो)र्जुनेन (for अर्जु) — b) T G3 4 समाहृते ; G1 2 M निराहृते ; G5 [s]पि चाहृतै (for यदाहृतम्). — c) K4 D8 तुंबरु ; Do1 Dn1 D2 5 तुम्बर (for तुम्बुरु) S तुम्बुरुप्रमुखैर्दत्तै — d) K1 ततो (for तेन). K1, 2 B2 Dn1 समोहयित ; K5 मोहयत (for अमो). S ताभ्यां तान्मोहयाञ्च(G1 2 5 M1 2 °द्रि)पून्

23 D4 missing (cf v l. 16). — a) B4 Dn D8 G1 एकधा ; T G2–5 M एकस्तु (M1 2 °श्च) (for एक स) — b) Do1 अदृश्यत, Dn2 दृश्यते च (for दृश्यते स्म) — c) D8 अला* (for अलात) T G2–4 सर्वं ; G1 5 M क्षिप्र (for सङ्ख्ये). — d) S भ्रमच्च(G5 °यय)स्त्राण्यदर्शयत् (T G2 M1 °यन्)

24 D4 missing (cf v l 16) — a) D8 6 रथ चर्योस्त्र (for चर्यास्त्र) T G2–5 -मायाभ्यां (for मायाभिर्) — b) Ś1 K1–3 Dn1 D5 परंतप — c) K5 शतशो (for °धा) S [अ]नीक (for राजञ्) — d) Dn1 महीभृतां (for क्षिताम्) S क्षत्रियाणां भय दधत् — After 24, S ins

307* भिन्नानीकाश्च दिग्मूढा भूय संत्रस्तचेतस ।
भल्लैरुत्कृत्तशिरस परलोकमथाविशन् ।

[ G1 4 5 M भीतानीकाश् (for भिन्ना) ]

25 D4 missing (cf v l 16) — a) D8 6 श्रेष्ठ ; G1 2 M सखे ; G4 सखे (for सङ्ख्ये) — b) M3–5 प्रेषितैश्च शितै (for ता नि) G1 M1 2 प्रेषितैरनिवर्तिना —B5 om $25^{c}$–$26^{d}$. — c) T G2–5 M3–5 प्र(G3 प्रा)याति (for प्रापुर्) D5 वरान् (for अमु) Ś1 लोक ; D5 सर्वान् (for लोक) G1 M1 2 शरैर्हियतोमु लोकं. — d) B1 2 G3 4 M3 [अ]वनीं ; D5 क्षितिं (for [अ]वनिं). M1 2 शरीरैरवनिं ययु

26 D4 missing (cf v. l 16) B5 om 26 (cf v l 25) Before 26, G2 ins संजय. — a) K5 Dn1 D7 8 धनूंष्यस्त्राणि यंतॄंश्च — b) D1 संगत (for साङ्गदान्) — c) K4 5 B3 Do1 Dn2 D7 8 G1, 5 M1 2 च सितैर् ; D2 5 निशितैर् (for च शितैर्). S बाणैस् (for भल्लैस्) — d) K2 फल्गुनि

राजपुत्रशतं तद्वत्सौभद्रेणापतद्धतम् ॥ २७
क्रुद्धाशीविषसंकाशान्सुकुमारान्सुखोचितान् ।
एकेन निहतान्दृष्ट्वा भीतो दुर्योधनोऽभवत् ॥ २८
रथिनः कुञ्जरानश्वान्पदातींश्चावमर्दितान् ।
दृष्ट्वा दुर्योधनः क्षिप्रमुपायात्तममर्षितः ॥ २९
तयोः क्षणमिवापूर्णः संग्रामः समपद्यत ।
अथाभवत्ते विमुखः पुत्रः शरशतार्दितः ॥ ३०

इति श्रीमहाभारते द्रोणपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## ४५

धृतराष्ट्र उवाच ।
यथा वदसि मे सूत एकस्य बहुभिः सह ।
संग्रामं तुमुलं घोरं जयं चैव महात्मनः ॥ १
अश्रद्धेयमिवाश्चर्यं सौभद्रस्याथ विक्रमम् । C 7 1634 B 7 46 2 K 7 46 2

---

27 D4 missing (cf v 1. 16) — a) Ś1 K2 D1 चूत(Ś1 °ता)राजो, K1 3 सुवराजो; B2 5 घृताराभो, Dc1 D6 चूताराभा, D2 5 (marg., sec m) वेल्लाराभो; D5 मूताराभो; D8 चुताराभो; M2 4 चूताराभे (for चूताराभो). Cd cites चूडावान् (meaning आम्रोद्यानं) Dc1 Dn1 D6 मभा — b) K3-5 B2-4 Dn1 G2 4 5 M5 पंचवर्ष (Dn1 °र्षा); M3 4 °वेष (for °वर्ष) K1 Dc1 Dn1 D6 फलोपगा (K1 °मा) — c) G5 कुल (for -द्रात) — d) Ś1 [अ]थेवद्; Ś2 K1-3 D1 [अ]च्चविद्; K5 Dn D2 3 6-8 [अ]भवद् (for अपवद्) K3 हित (for हतम्). K4 सौभद्रेणास्तु वीक्षत, D5 °ण तदा हतं; T G1 2 5 M Bom ed °ण निपातित

28 D4 missing (cf. v 1 16) — b) D6 तान् (for सु) — c) K1 D6 निहितान् — d) Ś K1 2 हीतो; D7 8 [अ]प्रीतो (for भीतो).

29 D4 missing (cf v 1 16). — b) Ś K Dn D1 5 चाभिनस्ततः; B1-3 5 Dc1 चावमज्जत; B4 D6 6 चाभि(B4 °पि)मज्जत, D2 चाभि*त्तत, D7 8 निहतांस्तत (for चावमर्दितान्) — c) Ś1 कृष्णम्; Ś2 K1 2 4 D1 कार्ष्णिम् (for क्षिप्रम्). — d) K3 D1 उपयातम्; K2 B1 (marg.) D6-8 M3 उपायां(B1 D7 8 °या)तम् (for उपायात्तम्). Ś1 अरिंदम, Ś2 K1. 3 4 D1 अमर्षण; D5 अमर्षितं; G4 अमर्षेत (for अमर्षित.)

30 D4 missing (cf v 1 16) — a) K5 Dn D3 6 8 S अपूर्व (G5 °वं) (for °र्ण) — b) G1 5 M3 संग्राम B Dc1 G1 M1 2 तुमुलोभवत्, Dn1 प्रत्यपद्यत, T G3-5 M3-5 समभू(G5 अभव)न्नृप (for समपद्यत) — c) Dc1 G1 M1 2 ततामवत्त, D2 अभवत्ते हि, D7 8 अयामवंस्ते K1. 3 D7 8 M4 विमुखा — d) K3 D7 8 पुत्रा. K1 -शताहता; K2 शरार्दिता, K5 -शतान्वित, Dn1 D5 शताचित, D7 8 शतार्दिता; M3 शरार्दित (for शतार्दित) B4 पुत्र शतशरार्दित

31

Colophon D4 missing — *Sub-parvan* Ś1 K1-3 5 B Dc1 Dn D1. 3 6-8 अभिमन्युवध (Dn2 D3 6 °युद्ध). — *Day of Droṇa's Generalship* Ś2 तृतीय दिने; K1-3 तृतीययुद्ध(K2 om युद्ध)दिवसे; G2 तृतीयेह्नि — *Adhy name* K5 राजपुत्रसैन्यमर्दन; D3 5 राजपुत्राणा वध (D5 मर्दन) — *Adhy no* (figures, words or both) B1 3 Dn1 44 (as in text), D3 41. — *Śloka no.* Dn1 30

## 45

☞ This adhy is missing in D4 (cf v. 1. 7. 44. 16)

1 a) G5 सूत त्वम् (for मे सूत). — b) Ś K1-3 त्वेकस्य; D1 ह्येकस्य (for एकस्य) — c) Dn1 D5 7 8 तुमल Dc1 संग्रामे तुमलं क्षयं

2 c) Ś K1 3 4 दृष्ट्वा, B1-3 Dc1 मन्ये (for तेषां)

किं तु नास्त्यनृतं तेषां येषां धर्मो व्यपाश्रयः ॥ २
दुर्योधनेऽथ विमुखे राजपुत्रशते हते ।
सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः ॥ ३
संजय उवाच ।
संशुष्कास्याश्चलनेत्राः प्रस्विन्ना लोमहर्षिणः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ ४
हतान्भ्रातॄन्पितॄन्पुत्रान्सुहृत्संबन्धिबान्धवान् ।
उत्सृज्योत्सृज्य समियुस्त्वरयन्तो हयद्विपान् ॥ ५
तान्प्रभग्नांस्तथा दृष्ट्वा द्रोणो द्रौणिर्बृहद्बलः ।
कृपो दुर्योधनः कर्णः कृतवर्माथ सौबलः ॥ ६
अभिद्रुताः सुसंक्रुद्धाः सौभद्रमपराजितम् ।
तेऽपि पौत्रेण ते राजन्प्रायशो विमुखीकृताः ॥ ७
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः ।
इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्जुनिमभ्ययात् ॥ ८
तमन्वगेवास्य पिता पुत्रगृद्धी न्यवर्तत ।
अनु दुर्योधनं चान्ये न्यवर्तन्त महारथाः ॥ ९

---

—[d]) S transp. येषां and धर्मो. D1 2 कृष्णो (for धर्मो). [d] K1-4 D1 व्यवस्थित (for व्यपाश्रय).

3 [a]) B1-4 5 D2 Dn1 D4 6 T G1 3 4 5 M तु, B1 G2 च; D1 [ऽ]पि (for ऽथ). —[b]) G1 राजन्पुत्रशते. —[c]) D1 (marg.) प्रतिपृच्छि; Cd °पत्ति (as in text). — After 3, D1 2 ins.:

305* मूर्ते हि सर्वधर्माणां दैवत स्वर्गवासिनाम् ।
स कृष्णो दैवतं येषां किं तेषां दुरतिक्रमम् ।
धर्मेणो प्रतिपक्षेर्षे कालेन परिगामिते ।
का चिन्ता महती भूप विमतया बाध्यते जनः ।
[illegible] पूर्वं परिणामदशा सुखम् [5]
तात विना महाराज समाधान न विद्यते ।
सर्वात्मरहितो राजन्भयुत्पापरिते फलम् ।

[ (L. 3) D2 प्रतिरोध. — D1 om. lines 5-7 ]

3 After the ref., G1 M ins.:

306* तावकास्तव पुत्राश्च वीक्षमाणा परस्परम् ।
[ G1 M1.2 [illegible] (for परस्परम्) ]

—[a]) [illegible] (sic); S1 K1-3 D1 [illegible] (for [illegible]). K4 [illegible] (sic), G1 M1 2 [illegible]. —[b]) S1 K1-3 B1 2 (marg. as in text) [illegible] D1 2 3 G1 [illegible]; D1 T G1-4 M लोमहर्ष; D1 °[illegible]. —[c]) D1 [illegible] (for [illegible]). —[d]) D1 [illegible] (for निरु°). — After 4, G1 M ins.:

310* [illegible] जीवितैषिणः ।

5 [a]) [illegible] M1 2 [illegible] —[b]) [illegible] G2 [illegible]

—[c]) K1 B1 Do1 D1 2 S गच्छंति; B1 समेइय; Dn1 संजग्मुस; Dn2 यान्तीयुस (for समियुस). B1 समीयुर उत्सृज्योत्सृज्य. —[d]) K4 M1.2 हतद्विपान्; B1 हयान्द्विपान्; Dn1 D1.2.5 G1 रथद्विपान् (for हयद्विपान्).

6 [a]) B1 D5 6 ततो; Dn2 D4 तदा (for तथा). S तां प्रभग्नां चमूं दृष्ट्वा. —[b]) Dn2 D5 6 महा (for बृहद्). —[d]) B1 Dn1 D3 6 G1 च; D1 तु (for [अ]थ). — After 6, G1 M1 2 ins.:

311* तथा सर्वे समभ्येत्य सौभद्रं [illegible] ।
तथा विनिहतां दृष्ट्वा तव सेनामनाथवत् ।

7 G1 M om. 7[ab]. —[a]) B1 3 5 Do1 अभ्यद्रवन्सु संक्रुद्धा; B1 4 अभ्यधावंत सं° (B1 °वन्सुसं°); T G1-4 अभिभूतास्तु सं°. —[b]) T G1-4 अपलायिन (for °राजितम्). —[c]) S K D (D1 missing) तु (for ऽपि). G1 M त्वदीयास्तव पुत्राश्च. —[d]) G1 M प्रायशो विमुखास्त्वभवन्. — After 7, S ins.:

312* सौभद्रेण महाराज शक्रप्रतिमतेजसा ।

8 [a]) B1-4 च (for तु). —[b]) K1 दर्पाच्च; Dn1 लोपाच्च (for दर्पाच्च). G1 बाल्यादप्रतीमय (corrupt). —[c]) Dn1 इष्वस्त्रवित्; D1 इष्वस्त्रयोर् (for °वित्). S इष्वस्त्रकुशलः शूरो. —[d]) Dn1 D5 6 आर्जुनिं लक्ष्मणो. G1 M1 4 लक्षणो (for लक्ष्मणो). K4 अभ्ययात्.

9 K4 om. 9. —[a]) S K (K4 om.) D1 पुत्रान्वगा; D3 5 अन्वगाच्च; D1 2 °गाद् (for °गेव). Cd (also) cites अनुकः; Cd अन्वक् (as in text). —[b]) S D1 गृध्नी (for गृद्धी). K1 निवर्तत; Dn1 स्ववर्तत; D1 2 निवर्तयन्; D1 2 निवारयन् (D1 °न्) (for न्यवर्तत). —[c]) S B1 2 (marg.) अथ; D1 तत्र (for अनु). —[d]) S संनिवृत्ता (for न्यवर्तन्त).

तं तेऽभिपिपिचुर्बाणैर्मेघा गिरिमिवाम्बुभिः ।
स च तान्प्रममाथैको विष्वग्वातो यथाम्बुदान् ॥ १०
पौत्रं तु तव दुर्धर्षं लक्ष्मणं प्रियदर्शनम् ।
पितुः समीपे तिष्ठन्तं शूरमुद्यतकार्मुकम् ॥ ११
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम् ।
आससाद रणे कार्ष्णिर्मत्तो मत्तमिव द्विपम् ॥ १२
लक्ष्मणेन तु संगम्य सौभद्रः परवीरहा ।
शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चार्पितः ॥ १३
संक्रुद्धो वै महाबाहुर्दण्डाहत इवोरगः ।
पौत्रस्तव महाराज तव पौत्रमभाषत ॥ १४
सुदृष्टः क्रियतां लोको अमुं लोकं गमिष्यसि ।
पश्यतां बान्धवानां त्वां नयामि यमसादनम् ॥ १५
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा ।
उद्ववर्ह महाबाहुर्निर्मुक्तोरगसंनिभम् ॥ १६

C 7 1848
B 7 45 16
K 7 46 16

---

10 $^a$) Ś$_2$ K$_3$ D$_1$ ते ते; K$_1$ ततो (for तं ते) S त तु वै K$_{1-3}$ Dn$_2$ D$_{1\,7\,8}$ सिषिचुर् (for पिपि°) Ś K (except K$_5$) Dn$_2$ D$_{1-3\,6-8}$ सिषिचुर्बाणैर् —$^c$) Ś K (except K$_5$) ... —$^d$) K$_4$ इव (for यथा) G$_{3\,4}$ तु (for च)

11 S reads 11 after 17$^{cd}$ followed by a repetition of 12$^{ab}$ —$^a$) D$_3$ G$_6$ पौत्रस् (for पौत्रं) Ś$_1$ —$^b$) G$_1$ च तव; Bom ed. तव च (for तु तव) —$^d$) S प्राहिणोद्यमसादन M लक्ष्मणं

12 For the repetition in S, cf. v. l 11 —$^a$) K$_4$ D$_1$ सपक्ष, G$_1$ (second time) सरूप (for -स वृद्ध) —$^b$) S (first time) देवैरपि दुरासद —$^c$) T G$_3$ कार्ष्णि (for कार्ष्णिर्) — After 12, K$_3$ (marg) ins

313* अब्रवील्लक्ष्मण क्रुद्धमार्जुनिं परमास्त्रवित् ।
शृणु वाक्य महाबाहो अभिमन्यो महाबल ।
गच्छ त्व पाण्डवाञ्शीघ्र मा युद्ध कुरु सुव्रत ।
तस्य तद्वचन श्रुत्वा अभिमन्यु प्रतापवान् ।
उवाच लक्ष्मण क्रुद्ध प्रहसन्निव भारत ।
गमिष्यामि चिर भ्रात सर्वानिताभिहत्य वै ।
पाण्डवान्प्रति चाद्यैव इति सत्य वदामि ते ।

— After 313*, K$_3$ (marg) reads 15 for the first time, repeating it in its proper place, while S ins after 12

314* सिंहशावो वने यद्वत्पुण्डरीकशिशु यथा ।

13 $^a$) G$_1$ M लक्षणेन B$_6$ च (for तु) B$_3$ लक्ष्मणेन पद पश्यन् —$^b$) T G$_{2-5}$ सौभद्र शुभलक्षण —$^c$) T G$_{2-5}$ चैव; G$_1$ M पीतैर् (for तीक्ष्णैर्) B$_3$ शरैस्तीक्ष्णै सुनिदितैस्तीक्ष्णैर् (sic) —$^d$) Ś$_1$ चार्दयत्, K$_3$ B$_4$ D$_5$ (before corr.) Ś$_2$ K$_{1\,3\,4}$ B$_3$ Dn D$_1$ चार्दित, $_{7\,8}$ T G$_{2-5}$ चार्पयत् (for चार्पित).

14 K$_3$ repeats 14$^a$ after 15 —$^a$) S सम क्रुध्यन् (for संक्रुद्धो वै) Ś K (K$_3$ both times) B$_5$ D (except Dc$_1$, D$_4$ missing) महाराज (for °बाहुर्) — K$_3$ reads 14$^b$ after the second occurrence of 14$^a$ —$^b$) B$_3$ गजाहत (for दण्डा°). Ś$_2$ द्विप; M$_8$ [ऽ]तक (for [ऽ]रग) M$_5$ (sup lin as in text) दण्डपाणिरिवान्तक — K$_3$ om 14$^c$ —$^c$) S महाबाहुस् (for °राज)

15 Before 15, G$_1$ M$_{3-5}$ ins अभिमन्यु K$_3$ (marg) reads 15 for the first time after 313* —$^a$) B$_6$ अदृष्ट, Dn$_1$ D$_{2\,5-7}$ G$_5$ सुदृष्ट; Dn$_2$ स दृष्ट (for सुदृष्ट) K$_3$ (first time) लोके (for लोको) —$^b$) N (except D$_{7\,8}$; D$_4$ missing, K$_3$ [both times]) अमु; S यम (for अमु) —$^c$) T G$_{2-4}$ पार्थिवानां (for बान्ध ) Ś$_2$ K$_{1\,2}$ (both times) D$_7$ त्वा; T G (except G$_6$) M$_{1\,2}$ च (for त्वां) —$^d$) G$_6$ शासन (for सादनम्) — K$_3$ repeats 14$^a$ after 15 and, reading 14$^b$ thereafter, ins

315* तस्य चातिक्रम दृष्ट्वा लक्ष्मणो युद्धकोविद ।
युद्ध चक्रे तदा तेन शस्त्रास्त्रैर्मतिमान्नृप ।
तयोर्युद्धमभीवासीद्बुधाङ्गारकयोरिव ।
अन्योन्य *जिघांसतोर्बलवासवयोरिव ।
शरजालैर्महाघोरैर्विव्यधुस्ते परस्परम् ।
लक्ष्मणो निशितैर्बाणैर्दशभिश्च स्तनान्तरे ।
आजघानार्जुनिं चैव तथा विद्धोऽभिमन्युना ।
पञ्चभि पञ्चभिर्बाणैर्निजघ्ने रथवाजिन ।
सारथिमिषुणैकेन ध्वज चैकेषुणाहनत् ।
त्रिभिर्बाणैर्धनुश्छित्त्वा आर्जुनि सुमहाबल

16 $^a$) K$_3$ अतितीक्ष्ण, G$_1$ M$_{1\,2}$ एतदुक्त्वा, G ... एवमुक्तस् (for एवमुक्त्वा) G$_{1\,5}$ M$_{1\,2}$ बाण (f... भल्लं) —$^b$) B$_3$ (marg) ऊर्ध्वबाहुर्; D$_2$ उज्जह...

7 1819 7 41 17 7 45 17 स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं सुभ्रु केशान्तं शिरोऽहार्षीत्सकुण्डलम् ।
लक्ष्मणं निहतं दृष्ट्वा हा हेत्युचुक्रुशुर्जनाः ॥ १७
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ।
हतैनमिति चुक्रोश क्षत्रियान्क्षत्रियर्षभः ॥ १८
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ १९
स तान्विद्ध्वा शितैर्बाणैर्विमुखीकृत्य चार्जुनिः ।
वेगेनाभ्यपतत्क्रुद्धः सैन्धवस्य महद्बलम् ॥ २०

आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः ।
कलिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्यवान् ।
तत्प्रसक्तमिवात्यर्थं युद्धमासीद्विशां पते ॥ २१
ततस्तत्कुञ्जरानीकं व्यधमद्धृष्टमार्जुनिः ।
यथा विवान्नित्यगतिर्जलदाञ्शतशोऽम्बरे ॥ २२
ततः क्राथः शरव्रातैरार्जुनिं समवाकिरत् ।
अथेतरे संनिवृत्ताः पुनर्द्रोणमुखा रथाः ।
परमास्त्राणि धुन्वानाः सौभद्रमभिदुद्रुवुः ॥ २३
तान्निवार्यार्जुनिर्बाणैः क्राथपुत्रमथार्दयत् ।

---

D5 उद्धरर्षं; C8 d उद्धर्षं (as in text) Ś2 D2 महाबाहो (for °बाहुर्)

17 $^{b}$) G1 M लक्षणस्य D2 लक्ष्मण शुभदर्शनं —$^{c}$) S (except T G2) सुनास D5 6 शु( D5 सु )भ्र (for सुभ्रु) —After 17$^{cd}$, S reads 11 followed by a repetition of 12$^{ab}$ —$^{e}$) G1 M लक्षण Dn1 श्रुत्वा (for दृष्ट्वा). —$^{f}$) D2 हत (for हा हा). —After 17, K3 D7 8 ins

316* स आवन्त्यराजपुत्रांश्च कुमारस्यानुयायिनाम् ।
जघान बाणैः सौभद्रः सहस्राणि चतुर्दश ।
षष्टिं रथसहस्राणि सप्त नागशतानि च ।

[(L 1) K3 अनुयायिन (for °यायिनाम्) ]

18 $^{a}$) K3 राजा (for क्रुद्ध). —$^{b}$) Ś1 D1 प्रिय (for प्रिये). —$^{c}$) B1 Dn2 D2 7 8 S Cd हत (for हत) K1 चुक्रुशु; D5 (marg) सक्रोधी (for चुक्रोश) —$^{d}$) Ś1 क्षत्रिय; Ś2 K3 क्षत्रिया; D2 चुक्रोश (for क्षत्रियान्). Ś2 B1 3 Dc1 क्षत्रियर्षभ; K1 2 भरतर्षभ (K2 °भ); Dn1 पुरुषर्षभ (for क्षत्रिय°)

19 $^{b}$) D7 8 द्रौणिश्चैव; G1 M अ( G1 M1 2 द्रा )-श्वत्थामा (for द्रोणपुत्रो)

20 $^{a}$) Ś K1-4 D1 2 6-8 तांस्तु; K5 Dn D3 5 तांश्च (for स तान्). Ś1 भित्त्वा (for विद्ध्वा). Dn1 D7 8 शितैर् (for शितैर्) —$^{b}$) D7 8 सोऽर्जुनि (for चार्जुनि). —$^{c}$) Dn2 D5 T G M1 2 [अ]भ्यद्रवत्, D6 8 [अ]प्यपतत् (for [अ]भ्य°) —$^{d}$) T G2-4 M5 (sup lin as in text) सैंधव च (for °वस्य). D2 T G1-4 महाचमूं; D7 8 बृहद्बल (for महद्बलम्)

21 $^{b}$) G1 गजानीकेन (for गजा°). S दंशिता. Ś K (except K5) D1 सौभद्रस्य महात्मन (Ś2 °वला) —$^{c}$) Ś1 K3 कलिंगास, Dn2 D1 कालिंगा( D1 °ग )श्च (for कलिङ्गाश्च) Ś1 तु (for च). Ś K2 D1 निषादश्च (for °दाश्च). —$^{d}$) K1 Dc1 G2 पुत्राश्च (for पुत्रश्च) —$^{cd}$) K5 B Dc1 Dn1 D2 प्रतप्तम् (for प्रसक्तम्) Dn2 D6-8 अत्यत (for अत्यर्थं) S तैर्नदद्भिर्यथादित्यो घनैश्छन्नो विशां पते.

22 $^{a}$) D2 6 स (for तत्) —$^{b}$) D2 व्यधयद् (for व्यधमद्) —$^{c}$) Ś2 मघौ; K4 Dn1 D1-3 5 6 8 वायुर्; K5 यस्तो (sic), B1 (marg) वहो; B1 (also marg) गच्छन्; B3 4 वहन्, T G3 4 [अ]खिलान्; G1 M1 2 विवस्वान् (hypermetric), G5 लिख (sic) (for श्विवान्) Ś1 K1-3 B3 Dn2 G2 यथाविधानि( B3 Dn2 G2 °धाश्चि )त्यगतिर् —$^{d}$) K1 3 om जलदान्. Ś1 [ऽ]परान्, K1 D1 [ऽ]परे; Dc1 युधि; D6 रणे (for ऽम्बरे).

23 $^{a}$) D7 8 तथा (for तत). Ś1 G5 क्रुद्ध°; Ś2 K1 3 D (D4 missing, Dc1 D5 [by corr]) T G2-4 M5 क्राथ (for क्राथ) B1 शरौर् (for व्रातैर्) B4 सत शरशतव्रातैर् —$^{b}$) Ś K1 3 D (except D1 2, D4 missing) T G3-5 M5 आर्जुनि (for आर्जुनिं). B3. 4 5 G1 2 3 M समवारयत् (for °किरत्). —$^{d}$) Dn2 तथा (for रथा). —Ś2 K1 4 D1 om 23$^{cf}$ D6 om 23$^{c}$—24$^{b}$. K3 reads 23$^{cf}$ on marg —$^{e}$) K3 B1 (marg. as in text) 3 Dc1 S (except G5) Cd तन्वाना; D7 8 कुर्वाणा (for धुन्वाना)

24 D6 om 24$^{ab}$ (cf v l 23) —$^{b}$) S अपोथयत् (for अथार्द°). —$^{c}$) Ś1 K1 2 4 D1 श( K4 स )-रौघेन (for °घेण). Ś K D1, 2 6, 7 S अप्र( Ś2 °प्य )मे

शरौघेणाप्रमेयेण त्वरमाणो जिघांसया ॥ २४
सधनुर्बाणकेयूरौ बाहू समुकुटं शिरः ।
छत्रं ध्वजं नियन्तारमश्वांश्चास्य न्यपातयत् ॥ २५
कुलशीलश्रुतबलैः कीर्त्या चास्त्रबलेन च ।
युक्ते तस्मिन्हते वीराः प्रायशो विमुखाभवन् ॥ २६

इति श्रीमहाभारते द्रोणपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

# ४६

धृतराष्ट्र उवाच ।
तथा प्रविष्टं तरुणं सौभद्रमपराजितम् ।
कुलानुरूपं कुर्वाणं संग्रामेष्वपलायिनम् ॥ १
आजानेयैः सुबलिभिर्युक्तमश्वैस्त्रिहायनैः ।
प्लवमानमिवाकाशे के शूराः समवारयन् ॥ २

संजय उवाच ।
अभिमन्युः प्रविश्यैव तावकान्निशितैः शरैः ।
अकरोद्विमुखान्सर्वान्पार्थिवान्पाण्डुनन्दनः ॥ ३
तं तु द्रोणः कृपः कर्णो द्रौणिश्च सबृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ४ C. 7 1864 B 7 47 4 K. 7 47 4

येन (for °मेयेण)

25 a) $D_5$ केयूरो (for केयूरौ) — b) $D_5$ बाहु°, $G_3$ बाहौ (for बाहू) $K_1$ $D_8$ सु (for स) $G_{1.3.4}$ M °मकुटं (for मुकुट) — c) $Dc_1$ ध्वजं छत्र (by transp), $M_{1.2}$ छत्रध्वजं. Ś K Dn $D_{1-3.5-8}$ सच्छत्र- ($D_8$ °छिन्न)ध्वजमथार — d) Ś K $B_4$ D (except $Dc_1$, $D_4$ missing, $D_7$ om) रथ (for अश्वांश्) Bom. ed चाश्वान् (for चास्य) $D_{7.8}$ निपातयत्

26 $D_8$ om. 26. — a) $B_{4.5}$ श्रुति (for श्रुत-) S -घनै (for -बलैः) — b) S कांत्या (for कीर्त्या). $K_1$ T $G_{2-4}$ शास्त्र; $D_2$ चास्य (for चास्त्र) — c) $K_3$ $D_{2.3.5}$ युद्धे (for युक्ते) $D_{5.6}$ हास्मिन्; $G_1$ तस्य (for तस्मिन्) $G_3$ मृते (for हते) T $G_{2-4}$ $M_{3-5}$ शूरा°; $G_5$ $M_5$ (sup lin) शूरे (for वीरा°) — d) $Dn_2$ $D_{5.6}$ ययौ (for [अ]भवन्)

Colophon $D_4$ missing — *Sub-parvan* Ś K (except $K_4$) B $Dc_1$ $Dn_1$ $D_{1.3}$ अभिमन्युवध — *Day of Drona's Generalship* $Ś_1$ तृतीयदिने; $K_{1.2}$ तृतीय युद्धदिवसे; $K_3$ तृतीये दिवसे — *Adhy name* $K_5$ $D_5$ लक्ष्मणवध; $Dn_2$ $D_{5.6}$ अभिमन्युयुद्ध; $D_3$ क्राथवध° — *Adhy no* (figures, words or both) $B_{1.2}$ $Dn_1$ S 45 (as in text), $D_2$ 42 — *Śloka no* $Dn_1$ 27

46

☞ This adhy is missing in $D_4$ (cf v 1 7 44 16)

1 a) $Ś_2$ यथा, $B_5$ अथ (for तथा) $K_4$ त्वरित (for तरुण) — b) S सौभद्र रथिना वर — c) S (except $G_1$ $M_{1.2}$) कुलानुरूपकर्माण — d) Bom ed [अ]पराजित (for °लायिनम्)

2 a) Ś $K_{1.2}$ आजानीयै°; $Dn_1$ आजानयै°, $Dn_2$ $D_{1.6}$ Cd अजानेयै° (for आजा°) $B_2$ च; Dn स (for सु) $Ś_1$ T $G_{2-5}$ बहुभिर् (for बलि°) — b) $K_{3.5}$ B $Dc_1$ $Dn_1$ $D_{2.5}$ S यां($D_2$ या)तम् (for युक्तम्). $D_{5.6}$ $G_1$ $M_{1.2}$ त्रिहायणै — c) S अनीकानि (for इवाकाशे) — d) $Ś_2$ वीरा (for शूरा°) $K_{4.5}$ B (except $B_4$) $Dc_1$ $Dn_1$ $D_{2.5.8}$ S पर्यवारयन् (for सम°)

3 a) Ś $K_{1.3}$ $D_{1.7}$ [प्]र्नास्, $K_4$ $Dn_2$ $D_{5.8}$ [प्]तांस्, $K_5$ $Dn_1$ $M_{3-5}$ [प्]व (for [प्]व) — cd) Bom ed transp विमुखान् and पार्थिवान् $D_5$ (by corr, sec m. as in text) तावकान् (for पार्थिवान्); S बलवान्पांडवात्मज°

4 a) $Dn_1$ तं च; $D_8$ ततो; S पुनर् (for तं तु). — b) $K_3$ न्याय; T $G_{2-4}$ सह (for च ह-).

7 1885 7 47 5 7 47 5 दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम् ।
सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ॥ ५
सौभद्रमितरे वीरमभ्यवर्षञ्शराम्बुभिः ।
तालमात्राणि चापानि विकर्षन्तो महारथाः ॥ ६
तांस्तु सर्वान्महेष्वासान्सर्वविद्यासु निष्ठितान् ।
व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ॥ ७
द्रोणं पञ्चाशता विद्ध्वा विंशत्या च बृहद्बलम् ।
अशीत्या कृतवर्माणं कृपं षष्ट्या शिलीमुखैः ॥ ८
रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः ।
अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ॥ ९
स कर्णं कर्णिना कर्णे पीतेन निशितेन च ।
फाल्गुनिर्द्विषतां मध्ये विव्याध परमेषुणा ॥ १०
पातयित्वा कृपस्याश्वांस्तथोभौ पार्ष्णिसारथी ।
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ११
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां पश्यतामवधीद्बली ॥ १२
तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ।
वरं वरममित्राणामारुजन्तमभीतवत् ॥ १३
स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष ।
पश्यतां धार्तराष्ट्राणामश्वत्थामानमार्जुनिः ॥ १४
षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः ।
उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्वतम् ॥ १५

5 $M_8$ om $5^c$–$6^b$ — $^a$) $K_5$ श्रुत्वा (for दृष्ट्वा). $G_5$ च (for तु) — $^b$) $K_5$ $Dn_1$ समर्पित (for समाहितम्). — $^c$) $D_{7,8}$ सैन्यास् (for सैन्य). — $^d$) S (except $G_1$, $M_8$ om) अभिद्रवत् (for उपा°)

6 $M_8$ om. $6^{ab}$ (cf v l 5) — $^a$) $Ś_1$ $D_{8,6}$ अपरे, $K_4$ $D_1$ इति ते; $G_5$ अपि ते (for इतरे) $Ś_1$ राजन्; $Dn_1$ $D_5$ S ($M_8$ om) वीरा (for वीरम्) — $^b$) $K_5$ अतिमात्र समर्पितं; $Dn_1$ अभ्यवर्षञ्शितै शरै; S ($M_8$ om) रथव्याघ्रास्तथायोध($G_5$ °योध; $M_4$ °वार)यन् — $^d$) $B_{1,4}$ महाबला; S चर्चैपिण (for महारथा)

7 $^a$) T $G_{2-4}$ महेष्वास (for °ष्वासान्) — $^b$) $K_8$ पारगान्, $D_5$ [अ]धिष्ठितान्, $D_{7,8}$ [अ]नुष्ठि° (for निष्ठि°) $D_2$ सर्वान्दिव्यास्त्रनिष्ठित. — $^c$) $Dn_2$ $D_{8,6}$ ऽव्यदारयद् (for व्यष्टम्भ°) — $^d$) S मुहूर्तमिव ($G_5$ °र्तमपि, $M_{8,4}$ °र्ताद्दिव) भारत.

8 $^a$) $K_2$ $D_{2,5}$ $M_{1,2}$ पंचशता (for पञ्चा°) $K_{8,5}$ B D (except $D_1$, $D_4$ missing) [अ]विध्यद् (for विद्ध्वा) — $^b$) S त्रिंशता (for विंशत्या) — $^d$) S शितै शरै (for शिलीमुखै) $Dn_1$ षष्ट्या बाणै कृप यथा

9 $G_5$ om 9–10 — $^a$) $M_{1,2}$ रुक्म (for रुक्म). S ($G_5$ om) प्रसन्नाग्रैर् (for महावेगैर्). — $^b$) $K_5$ $Dn_1$ -पूरितै; $D_{6-8}$ नोदितै (for चोदितै) $Ś_1$ आकर्णमथ चोदितै; S ($G_5$ om) °मभिनिःसृतै — $^c$) $B_5$ (marg) अभिक्ष्यद् (for अविध्यद्)

10 $10^c$ = 7. 47 $1^c$. $G_5$ om 10 (cf v l. 9) $D_2$ om $10^c$–$11^b$. — $^a$) T $G_{2-4}$ कर्णं च (for स कर्णं). — $^b$) $G_1$ $M_{1,2}$ तीक्ष्णेन (for पीतेन) $B_4$ $G_2$ च शितेन (for निशि°) $D_5$ हृ (for च)

11 $D_2$ om $11^{ab}$ (cf v l 10). — $^a$) $B_2$ $Dc_1$ घातयित्वा, $G_4$ ताप° (for पात°) $D_5$ तु तस्य (for कृपस्य). — $^b$) Ś $K_{1,4}$ $D_1$ तथोभौ, S उभौ च (for तथोभौ). $Ś_1$ प्रार्ष्टि, $K_1$ प्रार्दि; $D_1$ प्रार्ष्णि-; $G_{3,4}$ M प्राष्टि; $G_{8,4}$ प्राष्टि (for पार्ष्णि) — $^c$) $D_2$ कर्णं च नवभिर्बाणै

12 $^a$) $G_{8-4}$ वृन्दारकं — $^b$) $D_5$ प्रीति (for कीर्ति) — $^c$) S (except $G_1$ $M_{1,2}$) शूराणां (for वीराणां). — $^d$) $D_{6-8}$ बलं; S पुन (for बली)

13 $^b$) $Ś_1$ $K_1$ क्षुद्रकानां Ś $K_{1-3}$ सम($Ś_1$ °मा)र्पयत्; $K_{4,5}$ B (except $B_2$) $Dc_1$ $D_{1,6}$ (before corr) समार्प° (for समर्प°) — $D_3$ om (hapl) $13^{cd}$ — $^c$) $K_5$ $Dn_1$ $D_{2,5,6}$ एव बल($D_2$ वश)म्; T $G_{2-5}$ पर परम्; $G_1$ $M_{8-5}$ बल परम् (for वर वरम्) — $^d$) $Dn_2$ $D_{8,6}$ पातयतम् (for आरुजन्तम्)

14 $^a$) $D_7$ om. from स तु up to धारै (in $15^b$) $D_{8,6}$ बाण (for बाणै) $D_{3,5,8}$ सितैस्; $D_{8,6}$ -वातैस् (for शितैस्) $Ś_2$ तीक्ष्णै; $K_2$ कर्णं (for तूर्णं) — $^b$) $D_{5,8}$ प्रत्यविध्यस्स्तनांतरे; $G_5$ °ध्यदभीतवत्

15 $D_7$ om up to धारै (of v. l 14) — $^a$) S सं द्रौणिर्वि($G_2$ द्रोण वि)शिखै षष्ट्या. — $^b$) $K_{1-4}$ $D_1$ विष्वग्वातै., $K_5$ Dn $D_{2,3,5,6}$ $G_1$ M तिर्यग्धारै; $Dc_1$ $D_8$ तिर्यग्बाणै; T $G_{2-5}$ तीक्ष्णधारै (for तिग्म°). $D_{3,5,8}$ सुतेजसै.. — $^c$) $Ś_2$ $K_1$ $Dn_2$ $D_{1,2,6-8}$ विद्धो;

स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः ।
प्रत्यविध्यन्महातेजा बलवानपकारिणम् ॥ १६
तस्मिन्द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत् ।
अश्वत्थामा तथाष्टौ च परीप्सन्पितरं रणे ॥ १७
कर्णो द्वाविंशतिं भल्लान्कृतवर्मा चतुर्दश ।
बृहद्बलस्तु पञ्चाशत्कृपः शारद्वतो दश ॥ १८
तांस्तु प्रत्यवधीत्सर्वान्दशभिर्दशभिः शरैः ।
तैरर्द्यमानः सौभद्रः सर्वतो निशितैः शरैः ॥ १९
तं कोसलानामधिपः कर्णिनाताडयद्धृदि ।
स तस्याश्वान्ध्वजं चापं सूतं चापातयत्क्षितौ ॥ २०
अथ कोसलराजस्तु विरथः खड्गचर्मधृत् ।
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् ॥ २१
स कोसलानां भर्तारं राजपुत्रं बृहद्बलम् ।
हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् ॥ २२
बभञ्ज च सहस्राणि दश राजन्महात्मनाम् ।
सृजतामशिवा वाचः खड्गकार्मुकधारिणाम् ॥ २३
तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे ।
विष्टम्भयन्महेष्वासान्योधांस्तत्र शराम्बुभिः ॥ २४ C 7 1884 B 7 47 24 K 7 47 24

इति श्रीमहाभारते द्रोणपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

$K_5$ विध्यन्; $D_2$ धीमान्; $D_5$ वीर (for विद्धा) —[d]) $Dn_2$ $D_{5\ 6}$ मैनाक इ($D_5$ °कमि)व पर्वत

16 [a]) $G_3$ द्रोणं (for द्रौणिं) —[b]) S तिर्यग्धारै महायशा॰ —[c]) S महारणे (for °तेजा) —[d]) T $G_{2-5}$ $M_{3-5}$ भाह; $G_1$ $M_{1\ 2}$ भाशु (for अप)

17 [a]) $D_{5\ 6}$ शार (for बाण) S तस्मिन्द्रोण शिता न्बाणान् —[b]) Ś $D_5$ गृध्रो, $K_{1-3}$ Dn $D_{1\ 3\ 7\ 8}$ गृद्धो; $D_2$ $G_5$ ॰गृध्नुर्; $D_6$ गृध्य (sic), $G_3$ गृध्नो, $G_4$ गृध्नि (for ॰गृद्धी) $G_1$ $M_{1,2}$ न्यधारयत् (for न्यपात°) —[c]) S पुन (for तथा) $K_5$ $Dn_1$ $D_{2\ 5}$ [अ]ष्टौ तु; $B_{1-3}$ $D_{c1}$ S षाष्टि (for [अ]ष्टौ च) —[d]) S वधात् (for रणे)

18 [a]) $K_1$ द्वाविंशतं, $D_{3\ 5\ 6}$ द्वाविंशतिर्; S द्वात्रिंशत ($G_1$ $M_{1\ 2}$ °तो) (for द्वाविंशतिं) Ś K (except $K_5$) $D_1$ बाणान् (for भल्लान्) —[b]) Bom ed. च विंशतिं (for चतुर्दश) —[c]) $D_{2\ 7\ 8}$ च (for तु) $Dn_2$ $D_{5\ 6}$ पञ्चाशत च ($Dn_2$ तु) कौशल्य°

19 [a]) T G $M_{1\ 2}$ प्रत्य($G_1$ $M_{1\ 2}$ °त्या)क्षिपत्; $M_{3-5}$ प्रत्याहनत् (for प्रत्यवधीत्). — Ś K (except $K_5$) $D_1$ om. (hapl.) 19[cd], $B_3$ reads it on marg. —[c]) $K_5$ $Dn_1$ $D_{5\ 7\ 8}$ तैर($Dn_1$ तम)र्घमानं सौभद्रं; S वध्यमान स($G_5$ $M_{4\ 5}$ °नस्तु) सौभद्रो —[d]) S रुष्ट क्रुद्ध पशूनिव

20 [a]) N (except Ś $K_{2\ 3}$; $D_4$ missing) कोशला नाम्; T $G_{2\ 5}$ कौसला° (for कोसला°) $B_1$ $D_{3\ 5}$ S (except $G_1$ $M_{1\ 2}$) अधिप —[b]) $D_2$ कार्ष्णिमाताडय द्युधि, T $G_{2-5}$ कर्णिनापातयद्रथात् —[c]) S तस्याश्वा नार्जुनिश्चापं —[d]) $G_2$ रथात् (for क्षितौ).

21 [a]) Some MSS कोशल- (for कोसल) S को (T $G_{2\ 4\ 5}$ कौ)सलानामधिपतिर् —[b]) S (except $G_5$) चर्मखड्ग (by खड्गचर्म) $Ś_1$ $K_1$ $Dn_2$ $D_{7\ 8}$ T $G_{1\ 2}$ $M_{1\ 2}$ धृक्, $K_5$ B $D_{c1}$ $Dn_1$ $D_{2\ 3,5\ 6}$ $M_{3-5}$ भृत (for धृत्) —[c]) S (except $G_5$) चार्जुने (for फाल्गुने). $G_1$ M कोपात् (for कायात्) —[d]) $D_1$ हंतु (for हर्तुं)

22 [a]) $Dn_1$ तं (for स) Some MSS कोशलानां Bom ed. आधिप (for भर्तारं) B S कोस(B कोश; T $G_{2\ 3\ 4\ 5}$ $M_4$ कौस)लानां तु ($B_{4,5}$ स) भर्तारं —[b]) $Ś_1$ (sup lin as in text) महाबल (for बृहद्बलम्) —[c]) S हृद्यवि($G_4$ प्रत्यवि; $M_{1\ 2}$ हृदि वि)ध्यत्पृ($M_{1\ 2}$ °त्पृ)षत्केन ($G_{3\ 4}$ °ण) —[d]) $G_{1\ 3\ 4}$ $M_{1\ 2}$ स (for स) $B_{1-3}$ $D_{c1}$ $Dn_2$ T G $M_{1\ 2}$ छिन्न (for भिन्न)

23 [a]) $Ś_1$ $K_{1-4}$ स बभञ्ज; T $G_{2\ 4\ 5}$ $M_{3-5}$ अभ ज्यंत; $G_1$ $M_{1\ 2}$ अभजत; $G_3$ अभवंत (for बभञ्ज च) $D_3$ स (for च). —[b]) $D_3$ तत्र (for दश). $K_2$ B $D_{c1}$ $Dn_2$ $D_{5\ 6}$ राज्ञां (for राजन्). —[c]) $D_3$ सृजतामसिधारां च

24 [a]) $D_7$ om. from चरद् up to कर्णो (in 7 47 1)

# ४७

7 1885
7 48 1
7 48 1 संजय उवाच ।

स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः ।
शरैः पञ्चाशता चैनमविध्यत्कोपयन्भृशम् ॥ १
प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः ।
स तैराचितसर्वाङ्गो बह्वशोभत भारत ॥ २
कर्णं चाप्यकरोत्क्रुद्धो रुधिरोत्पीडवाहिनम् ।
कर्णोऽपि विबभौ शूरः शरैश्चित्रोऽसृगाप्लुतः ॥ ३
तावुभौ शरचित्राङ्गौ रुधिरेण समुक्षितौ ।
बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ॥ ४
अथ कर्णस्य सचिवान्षट् शूरांश्चित्रयोधिनः ।
साश्वसूतध्वजरथान्सौभद्रो निजघान ह ॥ ५
अथेतरान्महेष्वासान्दशभिर्दशभिः शरैः ।
प्रत्यविध्यदसंभ्रान्तस्तदद्भुतमिवाभवत् ॥ ६
मागधस्य पुनः पुत्रं हत्वा षड्भिरजिह्मगैः ।

---

— $^{b}$) K4 विचरद्; D6 व्यद्रवद्; D8 व्याचरन् (for व्यचरद्) · D8 इव (for रणे) — $^{c}$) B3 विरराभयन्; B3-5 Dn1 D5.8 T G3-5 व्यष्टभ° (for विष्टभ°) B3 D1 महेष्वासो (for °वांन्) — $^{d}$) Dn1 पुत्रास् (for योधांस्). S मोहयन्निव भारत

Colophon om in D1 D4 missing —*Sub-parvan* Ś K1-3 B Do1 Dn1 D3 ... अभिमन्यु वध —*Day of Droṇa's Generalship* Ś1 तृतीय दिने; K1 3 तृतीययुद्धदिवसे; K3 तृतीये द्दिवसे; G1 तृतीयेह्नि —*Adhy name* K6 D3 G1 वृषसेनवध; Dn1 D8 6 अभिमन्युयुद्ध. —*Adhy no* (figures, words or both) B1 2 Dn1 S 46 (as in text) —*Śloka no* Do1 Dn1 24

## 47

1 D4 missing up to त थि (in 14$^{c}$) (cf. v. l 7 44 16) D7 om 1$^{a}$ (cf v l 7 46 24) Ś1 om the ref. — $^{a}$) = 7 46 10$^{a}$ Ś कर्णं (for कर्णे) S तत कर्णं समासाद्य. — $^{b}$) S रणे (for पुनर्) T G1 3 विव्याथ — $^{c}$) Dn1 D1 पञ्चदशता. B3 D7 पुनम् (for एनम्). — $^{d}$) B1 Dn1 S द्रुत (for भृशम्)

2 D4 missing (cf v l. 1) D6 reads 2$^{ab}$ on marg — $^{a}$) T विव्याथ (for विव्याध) — $^{b}$) Ś1 2 (*sup lin*) K1 2 D1 शरांश्चिर; Ś1 (orig) स्तनांश्चिर् (for ताव°). — $^{c}$) B Do1 Dn D8 6 T G3.4 शारैर्; G2 रथैर्; G5 स पै (for स तैर्) K6 B3 Dn1 D2 आवृत; T G2-4 विकृत्त; G1 5 (before corr) विचित्र; G5 (by corr.) विध्वस्त, M1 2.4 5 (orig) प्रविद्ध (for आचित) M3 5 (*sup lin*) स तैर्विद्धो महाबाहुर् — $^{d}$) D7 om from शोभत up to चित्राङ्गौ (in 4$^{a}$). Dn1 मारिष (for भारत).

3 D4 missing (cf v l 1) D7 om 3 (cf. v l 2) — $^{a}$) G5 तं चैव (for कर्णं च) S युद्धे (for क्रुद्धो) — $^{b}$) D5 8 रुधिरापीड (for °रोत्पीड) Ś1 वाहन°; B1 धारिण (for वाहिनम्) S रुधिरौघपरिप्लुतं. — $^{c}$) D6 स कर्णोपि (for कर्णोऽपि वि). T G M1.2 कर्णस्त्वति (G1 M1 2 °स्तु वि)षमो तस्मात्; M3-5 कर्णश्च विषमौ तत्र. — $^{d}$) K6 D5 (by corr) G1 M3-5 छिन्नो; G3 4 चित्रैर्; G6 (marg) विद्धो (for चित्रो) K3 Dn1 [ऽ]ति भारत; G2 4 अभिप्लुत°; M3 [ऽ]सृगाप्लुतं (for °प्लुत°). — After 3, S ins

317* संध्यानुगतपर्यन्त शारदीव दिवाकर ।

[ G1 M3-5 मध्यानुराग; Cv सध्यानुगन (as above) ]

4 D4 missing (cf v l 1). D7 om 4$^{a}$ (cf v l. 2) — $^{a}$) K5 B Do1 Dn1 तौ तथा, S तौ तदा (for तावुभौ) Ś1 दिग्धागौ; Ś3 भिन्नांगौ (for चित्राङ्गौ) — $^{b}$) G5 रुधिरौघपरिप्लुतौ — $^{c}$) S यमतु कर्णसौभद्रौ

5 D4 missing (cf. v l 1). — $^{a}$) D5 6 विविधान् (for सचिवान्) — $^{b}$) S रथांश्च (for शूरांश्च). — $^{d}$) Dn1 तान् (for नि). S सौभद्रो न्य(T G4 ग, G3 [ऽ]भ्य)हनद्बली

6 D4 missing (cf v. l 1). — $^{a}$) K5 B D (except D1, D4 missing) T G5 तथा (for अथ) G2 उत्तरान् (for इत°) — $^{c}$) S अविभ्रान्तस् (for असंभ्रान्तस्)

साश्वं ससूतं तरुणमश्वकेतुमपातयत् ॥ ७
मार्तिकावतकं भोजं ततः कुञ्जरकेतनम् ।
क्षुरप्रेण समुन्मथ्य ननाद विसृजञ्शरान् ॥ ८
तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान् ।
सूतमेकेन विव्याध दशभिश्चार्जुनात्मजम् ॥ ९
ततो दौःशासनिं कार्ष्णिर्विद्ध्वा सप्तभिराशुगैः ।
संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत् ॥ १०
पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा ।
दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे ॥ ११
एतावदुक्त्वा वचनं कर्मारपरिमार्जितम् ।
नाराचं विससर्जास्मै तं द्रौणिस्त्रिभिराच्छिनत् ॥ १२
तस्यार्जुनिर्ध्वजं छित्त्वा शल्यं त्रिभिरताडयत् ।
तं शल्यो नवभिर्बाणैर्गार्ध्रपत्रैरताडयत् ॥ १३
तस्यार्जुनिर्ध्वजं छित्त्वा उभौ च पार्ष्णिसारथी ।
तं विव्याधायसैः षड्भिः सोऽपक्रामद्रथान्तरम् ॥ १४
शत्रुंजयं चन्द्रकेतुं मेघवेगं सुवर्चसम् ।
सूर्यभासं च पञ्चैतान्हत्वा विव्याध सौबलम् ॥ १५
तं सौबलस्त्रिभिर्विद्ध्वा दुर्योधनमथाब्रवीत् ।　C 7 1803 B 7 48 16 K 7 48 18

7 D4 missing (cf v l 1) — a) Ś K1-4 D1 7 8 तत, K6 B6 तथा, B2 [आ]त्मन, D2 निज (for पुन) Dn2 सूत्र (for पुत्र) — d) T G2 4 मत्स्यकेतुम्, G2 अश्म (for अश्व) S अपोथयत्, G6 (sup lin) अबोध° (for अपात°)

8 D4 missing (cf v l 1) — a) Ś1 G2 4 मार्तिकावत(G2 4 °थ)कांभोज, K1 2 4 D1 मातिकावत (K4 D1 °वि)क भोज; K6 Dn1 D6 मा(Dn1 म)र्ति कावतिक भोज; D2 मार्तिकावतिकांभोज; D7 8 मल्लिका वतकांभोज — b) S पुन (for तत°) — After 8ab, M3-5 ins

318* मगधाधिपतेश्चापि जयत्सेनस्य वै शिर ।

[ M4 वा (for वै) ]

9 D4 missing (cf. v l 1) — a) K1 2 D1 दु शासनिर्

10 D4 missing (cf v l 1) — a) K1 दु शा सनिं, Dn1 दौःशासन — c) T G1-4 M मरम (for संरम्भाद्) G6 सरक्तनयनो वाक्यम् — d) G2 इदमुत्त रमब्रवीत्

11 D4 missing (cf v l 1) — a) D2 कृत्वा (for त्यक्त्वा) — b) D8 om (hapl) from गत° up to दुक्त्वा (in 12a) D7 स्त (for गत°) — c) D6 विद्या (for दिष्ट्या) D2 6 इह, D7 त्वपि (for त्वपि) — d) D2 योद्धुत्वं (for योद्धु न) K2 4 6 Dn1 D1 5-7 मोक्ष्यसे

12 D4 missing (cf v l 1) D8 om up to दुक्त्वा (cf v l 11) — b) Ś1 कदार- (for कर्मार) Ś1 कार्ष्णिरपरिमार्जितं, D7 कार्मुक परिमार्ज्य तत्, D8 कार्मुक परि * * * — c) Dn1 [अ]सौ (for [अ]स्मै) — d) Ś K Dn1 D5, 7 8 द्रोणस्, Dn2 D5 द्रोणिस् (for द्रौणिस्) D2 5 6 G2-5 M अच्छिनत्

13 D4 missing (cf v l 1) — a) S धनुस् (for ध्वज) — K1 2 4 D1 om (hapl) 13b–14a, K2 reads it on marg Dn1 D2 6 om. (hapl.) 13cd — c) S दशभिर् (for नव°) — d) S (except G1) गृध्र (for गार्ध्र) Ś पक्षैर् (for पत्रैर्). — Ś K2 (marg) 4 B Dc1 Dn2 D1 2 5 7 8 ins. after 13 Dn1 D2 6 after 13ab

319* हयसम्भ्रान्तवद्राजस्तदद्भुतमिवाभवत् ।

14 D4 missing up to स वि (cf v l 1) K1 2 4 D1 om 14a (cf v l. 13) K2 reads 14a on marg — a) B1-3 S धनुस् (for ध्वज) — b) Ś K1-4 B1-3 D1 2 6 हत्वा च, K6 B4 5 Dn D5 7 8 हत्वोभौ, Dc1 (by corr sec m) D2 तयोभौ; M3-5 उभौ तौ (for उभौ च) S (except T G2) प्राष्टि- (for पार्ष्णि) — c) Ś [आ]यस, B2 (marg as in text) [आ]युधै°, D1 यत, D2, 4 6 रणे (for [आ]यसै°) K1 स विव्याधयितु खड्गि — d) Ś1 सोयाक्रामद्; Ś1 सोद°, B Dc1 D1 T G1-4 M4 5 सोपा° (for सोऽप°) K6 D7 8 रथांतरे; D4 रथांतरा

15 a) G6 शत्रुसैन्य च केतु च. — b) B (except B1) Dc1 महामेघ; G1 2, 4 M मोघवेगं; G2 मोघमेक (for मेघवेग). — c) Ś K1, 2 D1 सूर्यवासं; K6 सूर्याभास (for सूर्य°). — d) D7 8 पत्रभिः (for सौब-लम्)

16 a) Ś1 K1 स सौभद्रस, Ś1 G1 M1 2 सौबलस्त्व

7 1101 सर्व एनं प्रमथ्नीमः पुरैकैकं हिनस्ति नः ॥ १६
7 48 17 अथाब्रवीत्तदा द्रोणं कर्णो वैकर्तनो नृपा ।
7 48 17 पुरा सर्वान्प्रमथ्नाति ब्रूह्यस्य वधमाशु नः ॥ १७
ततो द्रोणो महेष्वासः सर्वांस्तान्प्रत्यभाषत ।
अस्ति वोऽस्यान्तरं कश्चित्कुमारस्य प्रपश्यति ॥ १८
अन्वस्य पितरं ह्यद्य चरतः सर्वतोदिशम् ।
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत ॥ १९
धनुर्मण्डलमेवास्य रथमार्गेषु दृश्यते ।
संदधानस्य विशिखाञ्शीघ्रं चैव विमुञ्चतः ॥ २०
आरुजन्निव मे प्राणान्मोहयन्नपि सायकैः ।
प्रहर्षयति मा भूयः सौभद्रः परवीरहा ॥ २१
अति मा नन्दयत्येष सौभद्रो विचरन्रणे ।
अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः ॥ २२
अस्यतो लघुहस्तस्य दिशः सर्वा महेषुभिः ।

(by transp.) K5 Dn1 हत्वा (for विद्धा) —$^{c}$) K1 5 G3 एव; Dn1 D7 8 एव; D2 एत (for एन) K4 5 B1 D4 प्रमथ्नीम; B3 D3 5 7 विमथ्नीम; S प्रमृ द्नीम (G1 M1, 2 °म) (for प्रमथ्नीम)

17 $^{ab}$) D4 om. from द्रोण up to ततो (in $18^{a}$). Dn1 अब्रवीच्च (for अथाब्रवीत्) B1 2 5 तथा; B3 पुनर्; D4 त्व*; S ततो (for तदा) D7 8 कर्णो द्रोण (by transp.) N (D4 om.) G5 रणे (for नृपा) —$^{c}$) G5 परान् (for पुरा) G1 M ह्यस्मान् (for सर्वान्) S प्रमृद्नाति (for प्रमथ्नाति) —$^{d}$) K5 त्व ब्रूह्य (sic) (for ब्रूह्यस्य).

18 D4 om up to ततो (of v l 17) D5 repeats $18^{ab}$ after 20 —$^{a}$) D3 4, 6 G1 5 M1 2 महेष्वासान् (for °ष्वास°) —$^{c}$) K (except K5) D1 अस्ति वा, Dn1 अस्यतो (for अस्ति वो) K4 B3 D2 5 किंचित् (for कश्चित्). S नास्य (G5 °त्र) बाणांतरं कश्चित् —$^{d}$) Dn2 om (hapl) from प्रपश्यति up to वास्य (in $20^{a}$) Ś K1, 2 प्रपश्यतु; K3 4 Dc1 D2 °श्यत; D1 5 °श्यत°, G5 (sup lin. as in text) प्रचाशति; Bom. ed [अ]थ पश्यत (for प्रपश्यति).

19 Dn2 om 19 (cf. v l 18). Ś K (except K5) D1 om 19. —$^{a}$) D7 om (hapl) from पितर up to सदधानस्य (in $20^{c}$). B1 Dc1 (marg. sec m) अण्वस्य; D4 अन्पिस्य (corrupt), G3 अन्वास्य; Cv अन्यस्य; Ca d अन्वस्य (as in text). D4 वि*रं; Ca. d पितर (as in text). Dc1 D2 ह्यस्य; G5 चा*; Cv यस्य (for ह्यद्य). Dn1 क्रुद्धस्य तरसा चास्य; T G1-4 M अस्यतो (M1, 2 अन्वास्य) विपरं (G1 °विधं) चास्य; Bom. ed. अण्वप्यस्यांतर ह्यद्य. —$^{c}$) D2 6 8 G3 शीघ्रता. —$^{d}$) S पांडवस्ये(G5 °स्यै)व (for °वेयस्य). Dn1 D3-6, 8 G1-4 5 (before corr.) M पश्यत; G5 (by corr.) दृश्यते (for पश्यत).

20 Dn2 om $20^{a}$ (cf v l 18), D7 om up to सदधानस्य (cf v l 19) — After $20^{ab}$, M3-5 ins

320* समो ह्यत सुदीप्तस्य सवितुर्मण्डल यथा ।

—$^{c}$) B1 सदहानस्य —$^{d}$) K (except K5) D1 S प्रमुचत; D7 8 [अ]विमु° (for विमु°) — After 20, Ś1 K (except K4) ins

321* विकर्षतो धनु श्रेष्ठ नान्तर दृश्यते हि वै ।

while D5 repeats $18^{ab}$ after it.

21 Dn2 om $21^{a}$–$23^{b}$ —$^{a}$) B Dc1 D2 3 4 6-8 अपि (for इव) —$^{b}$) K4 5 Dn1 D3 5 T G1-4 M इव; D8 मम (for अपि) G5 मोहयित्वा हि (for °यन्निव) B (except B3) D8 शायकैः; Dn1 चाशुगैः; S सैनिकान् (for सायकैः) —$^{c}$) D3 4 6 G1-3 M संहर्षयति; D5 (by corr sec m) प्रधर्ष°, T G4 संघर्ष° (for प्रहर्ष°) N (except Ś1 K7 8, Dn2 om.) T G1-4 मां; M1 2 मे (for मा). T G1-4 M वीर (for भूय) G5 संघर्षति महावीर — G4 om $21^{d}$ K1 2 read $21^{d}$–$22^{a}$ twice

22 For the repetition in K1 2, cf v l 21 Dn2 om 22 (cf v l 21). —$^{a}$) K5 B Dc1 Dn1 D3 4 7 मां (for मा) Ś1 K2 3 (first time) 4 D1 G1 M1 2 4 Cv अतिमान दधात्ये(K3 °दत्ये, G1 M1 2 4 °धत्ये)ष, Ś2 K1 (first time) T G2-5 M3 5 अभि(K1 G5 M3 5 °ति)मान दधात्ये(K1 °दात्ये)ष, D5 अभि(by corr °ति)मान करोत्येष —$^{b}$) K1 2 विचरद्; D1 व्यचरन् —$^{c}$) D4 तस्य; D8 चास्य (for यस्य). D8 संधानं (for संरब्धा) —$^{d}$) D6 पश्यन्ति न (by transp)

23 Dn2 om $23^{ab}$ (cf v l 21) —$^{b}$) D7 8 शरान्परमदारुणान्. —$^{c}$) D3 G5 निर्विशेष (for न वि°).

न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ॥ २३
अथ कर्णः पुनर्द्रोणमाहार्जुनिशरार्दितः ।
स्थातव्यमिति तिष्ठामि पीड्यमानोऽभिमन्युना ॥ २४
तेजस्विनः कुमारस्य शराः परमदारुणाः ।
क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः ॥ २५
तमाचार्योऽब्रवीत्कर्णं शनकैः प्रहसन्निव ।
अभेद्यमस्य कवचं युवा चाशुपराक्रमः ॥ २६
उपदिष्टा मया *अस्य पितुः कवचधारणा ।
तामेष निखिलां वेत्ति ध्रुवं परपुरंजयः ॥ २७
शक्यं त्वस्य धनुश्छेत्तुं ज्यां च बाणैः समाहितैः ।
अभीशवो हयाश्चैव तयोर्भौ पार्ष्णिसारथी ॥ २८
एतत्कुरु महेष्वास राधेय यदि शक्यते ।
अथैनं विमुखीकृत्य पश्चात्प्रहरणं कुरु ॥ २९
सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः ।
विरथं विधनुष्कं च कुरुष्वैनं यदीच्छसि ॥ ३०
तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन् । C 7 1915 B 7 48 31 K 7 48 31

— d) K3 Dn D4 e (before corr as in text) G5 -धन्विन (for -धन्वन)

24 b) D5 अथ (for आह) Ś1 B Dc1 T G1-3 -शराहत (for °र्दित) — d) G2 ताड्यमानो (for पीड्य°).

25 c) T G1-5 क्षिरति; Cd क्षिण्वन्ति (as in text) — d) K5 Dn1 शरा पावकवर्चसा; T G1-3 5 M घोरा पौ(G5 °रा पु, M1-5 °त्रा पौ)रुषव(T G2 3 °रुष)धा; G4 लोकास्तु हि * * यया — After 25, D7 8 ins

322* हीनस्त्वाक्षिविपाडानां पश्यतामद्य च द्विज ।
न मेऽङ्ग हीयते किंचिन्न वै वारोति मां तथा ।
कुमारवरवीरस्य संख्यपरमेषुभिः ।
बाणैरच्छिन्ननिर्मुक्तै शल्यैरन्तर्गतं मम ।
विचिन्वद्भिरिवासून्मे शरीरं न विमाव्यते । [5]
क किं किं स धनुर्वेदो येनैकेन वयं जिता ।

[(L 2) D7 इह ते (for हीयते).]

26 a) D3 तं चाचार्यो (for तमा°) K4 Dn द्रोण (for कर्णं) — b) G3 M प्रहसन्दानकैरिव (M1-5 °दं) — c) D3 पश्य, D5 यस्य (for अस्य) S अमेध कवचं चास्य — d) D8 युधि (for युवा) Ś K1-3 Dn1 D3 धा(K3 शा)स्य (for चाशु-) S युवा च लघुविक्रम

27 a) S (except G5) उपदिष्टं (for °दिष्टा) Ś1 विधा, Ś2 K B1-3 Dc1 D1 2 c-3 T G2 यस्य; B4 5 Dn D2 8 G5 चास्य; D6 यस्य; G1 3 4 M [अ]प्यस्य (for *अस्य) — b) Ś -धारिण; K (except K5) D1 धारिणी (K3 °णा); D4 -धारणात्; S -धारण (for -धारणा) — c) Ś K1-3 एव (for एष) S तदेष निखिलं वेत्ति — d) S (except G5) युधा (for ध्रुवं) — After 27, D7 8 ins.

323* ज्यालक्षण मया चेह नोपदिष्ट तु फल्गुने ।

28 a) Ś1 हास्य, K5 च तद्, T G2-5 नास्य, G1 M1 2 त्वय (for त्वस्य) — b) T G2-5 वा (for च) K5 सुसहितै (for समा°) G1 M अस्यतो हि (M2 °तोस्य) महात्मन — After 28ab, G5 reads 31c-32b G5 om 28c-29d — c) Ś1 अभी*वो, B1-3 5 Dc1 (before corr) D1-c अभीपवो; D3 अमितश्च (for अभीशवो) B1 Dc1 (by corr) Dn2 अभीषूंश्च हयांश्चैव, S (G5 om) अन्यतो लघुहस्तस्य — d) K2 पार्ष्टि-, K3 प्रार्ष्टि, K4 पार्ष्टि, G1 5 प्राष्टि, G3 4 प्राष्टि- (for पार्ष्णि) M4 सारथिं (for सारथी)

29 G5 om. 29 (cf. v. l. 28) G2 om 29ab. — a) D8 एवं (for एतद्). K4 महाराज (for महेष्वास) — b) Ś2 K (except K5) D1 G3 4 शक्यसे, Dn1 मन्यसे, D8 6 शक्य(D6 °क्ष)से (for शक्यते) — c) Ś2 Dn2 विरथीकृत्य — d) S (G5 om) तत (for पश्चाद्)

30 b) Ś1 जेतु सर्वैं (for अपि जेतुं) — d) Dc1 (by corr as in text) D2 4 5 यदिच्छसि (for यदी°). — After 30, D7 8 ins

324* विलक्षकरणं वा(? ना)द विमुखश्चप्रतो नृप ।
संधानकृतलक्षस्य किंचिद्याक्षिप्तचेतस ।

[(L. 1) D3 कर (submetric) (for -करण) D7 धृप (for नृप)]

On the other hand, T G2-5 ins after 30

325* पुर स्थितेन केनापि दुःशक्यो जेतुमार्जुनि ।

31 a) D7 8 इति (for तद्) — After 31ab, D7 8 ins

326* दृष्ट्वा सौभद्रमसपत्नमुखे दाम्यमकुर्वत ।

1916 40 32 4 31 अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत् ॥ ३१
अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी ।
शेषास्तु छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ ३२
त्वरमाणास्त्वराकाले विरथं षण्महारथाः ।
शरवर्षैरकरुणा बालमेकमवाकिरन् ॥ ३३
स छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
खड्गचर्मधरः श्रीमानुत्पपात विहायसम् ॥ ३४
मार्गैः स कैशिकाद्यैश्च लाघवेन बलेन च ।
आर्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराडिव ॥ ३५
मय्येव निपतत्येष सासिरित्यूर्ध्वदृष्टयः ।
विव्यधुस्तं महेष्वासाः समरे छिद्रदर्शिनः ॥ ३६
तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम् ।
राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् ॥ ३७
व्यसिचर्मेषुपूर्णाङ्गः सोऽन्तरिक्षात्पुनः क्षितिम् ।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ॥ ३८
स चक्ररेणूज्ज्वलशोभिताङ्गो
बभावतीवोन्नतचक्रपाणिः ।
रणेऽभिमन्युः क्षणदासुभद्रः

---

नष्टलक्षः कुमारोऽयं हन्यतां हन्यतामिति ।
तस्य चिन्तयमानस्य अभिमन्योर्महात्मनः ।

— G₅ reads 31ᶜ–32ᵇ after 28ᵃᵇ — ᵈ) S (except G₅) पृष्ठतो (for पृषत्कैर्) D₃ ₄ ₅ G₁ ₅ M अच्छिनत्.

32 For sequence in G₅, cf v l 31. — ᵃ) K₃ S द्रोणो (for भोजो) — ᵇ) Ś₁ K₃ ₄ प्रा(K₄ पा)र्ष्णि ; S (except T G₂) प्राष्णि (G₃ ₄ °ष्णि) (for पार्ष्णि) — ᶜ) K₅ Dn₁ D₃ ₅ द्रोणस्, G₅ (marg) द्रौणिस् (for शेषास्). K₆ च ; S (except G₅) च (for तु). D₇ ₈ -वर्माण (for धन्वान). — ᵈ) D₅ G₅ अवाकिरत्.

33 K₁ om (hapl) 33 D₁ repeats 33ᵃᵇ after 33 — ᵃ) T G₂–₅ तदा (for त्वरा-) — ᶜ) T G₂–₅ शरवर्षेण महता — ᵈ) G₆ बाणैर् (for बालम्) D₈ एवापि ; G₄, ₅ पुनम् (for एकम्). D₄ समाकिरन् (for अवा°)

34 D₁ om 34ᵃᵇ. — ᵃ) S (except M₅) स (for स). D₂ छिन्नधन्वापि विरथ. — ᵇ) Dn₁ ससरन् (for -पालयन्) T G₂–₄ हताश्वो हतसारथि — ᶜ) S शीघ्रम् (for श्रीमान्). — ᵈ) K₁ ₄ ₅ Dc₁ Dn D₁–₃ ₅ G₁ M₁ ₂ विहायसा ; K₃ D₄ °यस ; G₂ damaged (for विहायसम्). — After 34, D₇, ₈ ins.

327* मण्डलानि सुशिक्षाभिर्गतप्रत्यागतानि च ।

35 B₄ om. 35ᵃ–36ᶜ — ᵃᵇ) Dc₁ Dn₂ D₂, ₅ च ; D₇ तु (for स) K₃ D₃ ₄ केशिकाद्यैश् ; K₄ B₃ Dn₂ D₆ कौशि° ; Dn₁ D₆ केश° (for कैशि°) S बल-लाघवशिक्षाभि कै(T G₂ ₃ कौ)शिकानां च (G₅ °कश्येन) विद्यया. — ᶜ) K₃ आरुजद् (for आर्जुनिर्). Ś₁ K (except K₆) D₁ व्यरुज(Ś₁ °च)द् (for व्यचरद्). S

भृश युद्धोऽर्जुनिर्व्योम्नि — ᵈ) S व्यचरत् (for भृश वै)

36 B₄ om. 36ᵃᵇᶜ (cf v. l 35) — ᵃ) Dn₁ D₄ मय्येव (D₄ °वा) ; D₅ ₆ मध्ये च (for मय्येव) Dn₂ एव (for एष). S मयि साधि(T G₂ ₄ कि नि)पतेदेष. — ᶜ) Ś K D (except Dc₁) G₁ M₃–₅ महेष्वास (for °ष्वासा). — ᵈ) S निररे (for समरे) Ś K (except K₆) D₁ समरे छिन्नधन्वि(K₁ ₂ D₁ °न्व)नं

37 ᵇ) S K (except K₆) Dc₁ वरत्सरं ; D₂ ₄ -मयच्छर ; D₃ मय शर , D₇ ₈ -मयत्सर (for °त्सरुम्) G₅ खड्गचर्मणि च त्सरुं — After 37ᵃᵇ, N ins

328* क्षुरप्रेण महातेजास्त्वरमाण सपत्नजित् ।

[ Dn₁ वेगस् (for तेजास्) Dn₂ स्फुरमाण (for त्वर-माण). ]

— ᶜ) G₂ damaged, G₃ कालेयो (for राधेयो) G₁ M दशभिर् (for निशितैर्) — ᵈ) S सुप्रभं (for चोत्तमम्).

38 ᵃ) D₈ व्यसिचर्मेषुपूर्णाग , D₄ व्यासिवर्मा सुपूर्णाग , T G₂ ₄ व्यसिचर्मा निघूर्णाग ; M₁, ₂ व्यसिचर्मेषु चूर्णाग — ᵇ) B Dc₁ च्युत क्षितिं (Dc₁ °तौ), Dn₂ D₅ ₄, ₆ पपात ह (Dn₂ यत्) (for पुन क्षितिम्) — ᵈ) K₃ क्रोधो (for क्रुद्धो). K₁ (before corr as in text) [ऽ]भ्यधावत ; K₄ ₅ D₁ [ऽ]भ्यभापत (for °धावत).

39 ᵃ) K₆ Dn₁ D₂, ₃ ₅ ₆ रेणूत्कर (for °ज्ज्वल). B₄ चित्रिताङ्गो (for शोभि°) S स चक्रपाणिर्ज्व(T G₁ ₂ ₅ °ण्युज्ज्व ; M₁ ₂ °णी ज्व)लदीप्तगात्रो — ᵇ) B₁ ₅ [उ]ज्ज्वल ; D₂ [आ]हृत (for [उ]ज्ज्वल-) T G₂ पत्रिणा स ; G₁ M -वक्त्र(M₃ °क्र)नास (M₁ ₂ °स); G₃ पत्रराशिव ; G₄ पत्रिणा सम ; G₅ -पत्रिनासं (for

स वासुभद्रानुकृतिं प्रकुर्वन् ॥ ३९
सुनखविकृतंकरागवक्त्रो
भ्रुकुटिपुटाकुटिलोऽतिसिंहनादः ।

प्रभुरमितबलो रणेऽभिमन्यु-
र्नृपवरमध्यगतो भृशं व्यराजत् ॥ ४०

इति श्रीमहाभारते द्रोणपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

# ४८

संजय उवाच ।
विष्णोः स्वसानन्दिकरः स विष्ण्वायुधभूषितः ।
रराजातिरथः संख्ये जनार्दन इवापरः ॥ १

मारुतोद्धूतकेशान्तमुद्यतारिवरायुधम् ।
वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं सुरैरपि ॥ २
तच्चक्रं भृशमुद्विग्नाः संचिच्छिदुरनेकधा । C. 7 1929 B 7 49 3 F 7 49 4

-वक्त्राणि ) D₂ ॰ विकाशि वक्त्र' D₃ 'क )चक्त्राणि —ᵃ) K₃ B De₁ D₇ D₃ छत्राभाम स, K₃ De₁ [ marg sec m ] Dn₁ D₁ रौ )द्र, K₄ छत्र मत्यौद्र (sic), K₁ D₂ ₃ ₅ ₈ क्षितिनाम रौ( D₁ न ड, D₃ छविमान्द्रु रौद्र ; D₄ छत्राभिषद्र, S चन्द्रानुसमद्रज (G₃ M₁ ₂ ₄ ₅ 'मद्र )( for छत्राभुमद्र ) —ᵉ) K₂ ₄ ₅ B D ( except D₁ ) S -देवानु ( for मद्रानु ) F₄ -वृषि ( for कृति ) K₄ De₁ D₁ ₃ T G₁-₃ M₁-₅ विकुर्वन्, D₄ प्रकुर्वत ( for र्वन् )

40 ᵃ) K₃ ₄ B₁ D₂ ₁-₂ ग्रुत, B₁ द्रुत, P₁ De₁ Dn₁ छन, D₁ G₃ युत, D₃ G₁ नृत ( for ग्रुत ) D₃ ₄ कृतोत्कराग, D₁ तुंक, T G₁-₄ M -कृतांगराग ( G₄ 'ज ), G₂ कृतान्तांग ( for कृतैकराग ) B De₁ D₂ वक्त्रो; T G₁-₃ M₃ ₂ ₂ -वक्त्र, G₃ राग ( for वक्त्रो ) —ᵉ) Ś₁ Dn₁ भ्रुकुटि, De₁ D₁-₁ भ्रू' ( for भ्रु ) Ś₁ K₃ ₄ B ( except B₃ ) D₃ ₄ -पुटा कुटिलो ( for 'कुटिलो ) D₄ नृ ( for ऽति ) S भ्रुकु टिपुटाकुटिलाति( G₃ 'द्रि ; M₁-₅ 'सि )सिंहनाद —ᵉ) D₄ प्रभुरमितबलोऽभिमन्युवीरो, S वभुरमितबल रणेभि मन्योद —ᵈ) Dᵉ ( marg as in text ) पृप ( for नृप ) D₃ रण ( for वर ) Ś K₁-₂ D₂ ₂ ₄ व्यराजतेति; K₄ व्यराजत् ; B De₁ विराजते स्म ; D₂ नृप व्यराजतेति; D₃ ₂ व्यराजतोऽप्र ( for भृशं व्यराजत् ) T G₁-₄ M न नृपबल सहवेऽप्यरि( T G₁-₄ हे व्यति )प्रणुद, G₂ नृपबल सहननेऽप्यरिप्रणुद

Colophon om in S —*Sub-parvan* Ś K₁ ₂ ₃ B De₁ Dn D₁ ₄ ₅ ₇ ₈ अभिमन्युवध॰ —*Day of* *Droṇa's Generalship* Ś₁ तृतीयदिने, K₁-₃ तृतीययुद्ध दिवसे, D₁ तृतीयेऽहनि —*Adhy name* K₄ धनुर्ज्या छेदन, Dn₁ ज्याछे, D₃ ₂ अभिमन्युयुद्ध ; D₄ चक्रव्यूहे धनुर्ज्याछेदन Dᵉ अभिमन्युयुद्धे धनुर्ज्याछेदन —*Adhy no* ( figures, words or both ) B₁ Dn₁ 47 ( as in text ), D₂ 44 —*Śloka no* Dn₁ 40

## 48

1 S om the ref —ᵃ) Dn₁ विष्णु ( for विष्णो ) Dn₃ D₂ ₄ ₆ S स्वसुर् ( for स्वसा ) K ( except K₁ ) B₃ ₃ De₁ ( before corr as in text ) Dn₁ D₁-₅ ₇ ₈ नन्दकर ( for नन्दि' ) B₁ ₄ ₅ De₁ ( by corr ) विष्णो स्वस्रानन्दकर —ᵇ) D₃ T G₃-₅ भूषण ( for 'षित ) Dn₁ विष्ण्वायुधविभूषित Cd cites विष्ण्वायुध —D₇ ₈ om 1ᵉ-2ᵇ —ᶜ) G₁ M रथोत्तम ( for रथः संख्ये ) T G₂ रणे; G₁-₂ युद्धे ( for संख्ये ) —ᵈ) S स विष्णु रिव फाल्गुनि

2 De₁ D₁ ₂ om. 2ᵃᵇ ( for D₁ ₂, cf v 1 1 ) —ᵃ) D₃ मारुतोद्धूत, G₁ ₂ ₄ M₁ ₂ 'ताधूत ( for 'तोद्धूत- ) —ᵇ) Ś₁ B Dn D₁-₃ G₂ रथवासि ( for 'तारि ) Cs d cite वारि T G₂ ₄ रथकामुकायुध ; G₅ उद्यत सुमहा' —ᶜᵈ) Ś₁ D₃ दुःसमीक्ष, K₁ D₄ 'मीक्ष्य ; Dn₃ दुर्निरीक्ष्य ( for दुःसमीक्ष्य ) S अभिमन्योर्वपुर्युद्धे सुरैरपि निरीक्षित —After 2, S ins

329* यदि पाणितलादेतच्चक्रं मुच्येत फाल्गुने' ।
सरदानान्मातुलस्य विष्णोश्चक्रमिवापतेत् ।

[ ( L. 1 ) G₃ मुचेत ( for मुच्येत ) T G₂-₃ M₃ ( also

